सरस्वतीभवन-ग्रन्थमाला
[ १०६ ]

परमानन्दचक्रवर्तिप्रणीतया
विस्तारिकाव्याख्यया

संवलितः

# काव्यप्रकाशः

[ द्वितीयो भागः ]




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

सरस्वतीभवन-ग्रन्थमाला
[ १०९ ]

परमानन्दचक्रवर्तिप्रणीतया
विस्तारिकाव्याख्यया
समन्वितः

# काव्यप्रकाशः

[ द्वितीयो भागः ]



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Val. 106 ]

# KĀVYAPRAKĀŚA

[ Part II ]

WITH THE COMMENTARY

**VISTĀRIKĀ**

by

**PARAMĀNANDA CAKRAVARTĪ**

EDITED BY

**GAURINATH SASTRI**




Sampurnanand Sanskrit Vishvavidyalaya

VARANASI

1982

Published by—
DR BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ
'VĀGĪŚA ŚĀSTRĪ'
Research Publication Supervisor
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

Available at—
Sales Department,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi-221002. ( India )

First Edition : 500 Copies.
Price Rs. 48.00

Printed by—
Ghanaśyāma Upādhyāya
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press
Varanasi.

सरस्वतीभवन-ग्रन्थमाला
[ १०६ ]

परमानन्दचक्रवर्तिप्रणीतया

विस्तारिकाव्याख्यया

संवलितः

# काव्यप्रकाशः

[ द्वितीयो भागः ]

सम्पादकः

श्रीगौरीनाथशास्त्री




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

२०३८ तमे वैक्रमाब्दे १९०३ तमे शकाब्दे १९८२ तमे खैस्ताब्दे

प्रकाशकः—
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानप्रकाशनपर्यवेक्षकः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य ।

प्राप्तिस्थानम्—
**विक्रयविभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२.

प्रथमं संस्करणम्, ५०० प्रतिरूपाणि
मूल्यम्—४८·०० रूप्यकाणि

मुद्रकः—
**घनश्याम उपाध्यायः**
व्यवस्थापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य

# प्रास्ताविकम्

परमानन्दचक्रवर्तिविभावितया काव्यप्रकाशविस्तारिकया संवलितस्य राजानकमम्मटविरचितस्य काव्यप्रकाशस्य षडुल्लासात्मकः प्रथमो भागः पञ्चहायनेभ्यः प्रागनुसन्धानसंस्थानेनं प्रकाशितो जिज्ञासुभिर्विद्वद्भिश्च निर्भरं समादृतः। अवशिष्टश्चतुःसमुल्लासात्मको द्वितीयो भाग इह प्रकाश्यमानो विलसति साम्प्रतं भवदीयकराम्बुजसम्पुटे। काव्यस्य निर्दोषता काव्यवपुर्विभूषणं च कथं स्यातामिति धिया काव्यदोषगुणालङ्कारविवेचनं मुख्यतो व्यधायि द्वितीये भागेऽस्मिन् मम्मटेन।

अलङ्कारगगनमण्डले नक्षत्रभूतेष्वालङ्कारिकेषु हिमांशुरिव विभ्राजते देदीप्यमानो मम्मटः। ध्वनिप्रस्थापनपरमाचार्योऽसौ ध्वनिपर्यवस्थायकमतनिरसनं तथा व्यधाद् यत् परवर्तिभिर्न कर्तुमपारि ध्वनिविरोधो मनागपि। काव्यप्रकाशेऽस्मिन् कारिकाः, तासां गद्यात्मिका वृत्तिः, संस्कृतप्राकृतोदाहरणानि च विलसन्ति। कारिकाः स्वतो मम्मटेन विरचिताः सन्ति, गद्यात्मिका वृत्तिरपि तेनैव प्रणीताऽन्येन वेति विचिकित्सन्ते केचन विचक्षणाः। अल्लटसाहाय्यकमाश्रित्य मम्मटेन एकादशख्रीस्तशताब्दभवेन सम्भूय ग्रन्थोऽयं विनिर्मित इति पाश्चात्या विद्वांसः समामनन्ति। परिकरालङ्कारतोऽग्रे ग्रन्थोऽयमल्लटेन सम्पूरित इति पर्यालोचयन्ति केचिद् भारतीया ऐतिह्यविदः। दशम उल्लासे काव्यप्रकाशविस्तारिकायां परमानन्दचक्रवर्तिना कारिकाकाराद् वृत्तिकारो भिन्नो व्याहृतः 'एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः' (१४०) इति कारिकाव्याख्यानप्रसङ्गे। यथा— 'अत एवाह वृत्तिकारः—अलङ्काराणामेकत्र समावेशेऽपीति। अत एव च विरोधपदमन्यथैव योजितम्, अन्यथा समावेशेऽपि विरोधादित्यसङ्गत्यापत्तेः' (२८२ पृ०) इति।

यद्यपि सकलशास्त्रनदीष्णता दृश्यते मम्मटस्य, तथापि व्याकरणं विशेषतोऽनुध्यातं तेन। च्युतसंस्कृतिशब्दो व्याकरणलक्षणहीनतार्थकः। व्याकरणलक्षणहीने शब्दे च्युतसंस्कृतिदोष उद्घोष्यते मम्मटेन। तत्र— परस्मैपदे प्रयोक्तव्य आत्मनेपदम्, पुंसि क्लीबम्, क्लीबे वा पुंप्रयोगादयो

मन्यन्ते, व्याकरणानुसारेण सिद्धस्यापि पदस्य प्रयोगेऽसामर्थ्यमभिधीयते। गमनार्थे हन्तेरसामर्थ्यमभ्यधायि मम्मटेन। विस्तारिकाकारेण प्रहतोद्धत-पद्धतिजघनजङ्घादिषूपसंदानेन गतेः प्रत्यायनाद् धातुपाठे 'हन हिंसागत्योः' इत्यत्र गतिपाठवैफल्यं नास्तीति प्रतिपादितम्। तिङन्तरूपाणि नोपलभ्यन्ते गत्यर्थे हन्धातोरिति तदाकूतम्। वस्तुतस्तु वाल्मीकीये रामायणे ( २, ७३, २ ) महाभारते ( ५, ४२, ३५; ८, १, ५६ ) च तिङन्तरूपाणि प्रयुक्तानि समासाद्यन्ते गत्यर्थकानि हन्धातोः।

अन्यानि व्याकरणशास्त्रसम्बन्धीनि निदर्शनानि विलोक्यन्तां मम्मटस्य—'शब्दशक्तिमहिम्ना श्रुत्येव षष्ठीवत् सम्बन्धं प्रतिपादयन्ति' (१७४); तद्वत् तेन तुल्यं क्रिया चेद् वतिः' इत्यनेन विहितस्य वतेः स्थितौ 'इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति नित्यसमासे इवशब्दयोगे समासगा' ( १७५ ) इति। कात्यायनवार्त्तिकस्वरूपं त्वस्माद् भिन्नम्—'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति। मम्मटात् परवर्तिन्यां वैयाकरणसिद्धान्तकौमुद्यां तु—'इवेन समासो विभक्त्यलोपश्च' इति। इत्थं काव्यप्रकाशे 'नित्यसमासः' इत्यतिरिक्तं पदं दृश्यते। एवमेव 'वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि। कर्मकर्त्रोर्णमुलि' ( १७९ ) 'अयः शूलेनान्विच्छति—आयःशूलिकः' इत्यतिशयोक्तिः ( १८४ ), 'अत्र विजेय' इति कृत्यप्रत्ययार्थेऽवाचकः ( ४० ) इत्यादिस्थलेषु व्याकरणं विवेचितं काव्यप्रकाशे।

काव्यप्रकाशस्यास्मिन् भागे प्राकृतोदाहरणानां चतुर्विंशतिर्दृश्यते। यथा साम्प्रतं भाषाभेदो विलोक्यते, तथा पूर्वं नासीत्। प्राकृतभाषाकाव्यमपि संस्कृतकाव्यवत् परीक्ष्यते स्म। एकत्र तु संस्कृतप्राकृतभाषयोः श्लेषः प्रदर्शितः—'महदे सुरसन्धम्मे तमवसमासङ्गमागमाहरणे' ( १५६ ) इति।

यद्यपि मम्मटेन चित्रकाव्यं निदर्शितम्, तथापि तस्य कष्टत्वमपि समुदीरितम्—'कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते' (१६३) इति।

समुद्धृतानामुदाहरणादीनां पाठभेदाः काव्यप्रकाशकारेण प्रायस्तत्र दर्श्यन्ते, यत्र कश्चिदर्थभेदो जायते। यथा—'कुसुमेण' इति पाठे वाक्यगा (१८२); क्वचिद् युक्तायुक्तत्वसमन्वये पाठनिर्णयाय स्वमतमप्याविष्क्रियते। यथा—'क्षपाचारिभिः' इति पाठे युज्यते समन्वयः (५३); 'चेत् स्यात्'

इति युक्तः पाठः (५४); 'कृतवतः' इति पाठे तु मतयोगो भवति (५७), कम्पमाना इत्यत्र 'कम्पमापुः' इति च पठनीयम् (७०) इति ।

रुद्रटः (१५६); भट्टोद्भटः (१६३); वामनश्च (१४५); इत्याचार्यत्रयी नामग्रहणपूर्वकं स्मृता मम्मटेन काव्यप्रकाशस्यास्मिन् द्वितीये भागे । बहुत्र तु 'केनचित्' 'यदपि' इत्यादिभिः पदैः पूर्ववर्तीनि मतानि समुल्लिख्य निराकृतानि । यथा–इति केनचिदुक्तम्, तदयुक्तम् (२२७); इत्यभिधानमसत् (१२४); यदप्युक्तम्···· ··इति, तदपि न युक्तम् (१२५); इत्यभिधानमसत् (१२४), एष पदानुप्रास इत्यन्ये (१४६) इति ।

निदर्शनार्थं मम्मटेन यत्र किमपि निर्णीयते, तत्सदृशेष्वन्यस्थलेष्वपि विद्वांसः परीक्षणार्थं प्रार्थ्यन्ते––'एवमेवान्यत्रापि परीक्ष्यम्' (२८५) इति । यद्यपि विवादग्रस्तस्थलेषु विषयः स्फोर्यते काव्यप्रकाशे, तथापि नाभिनिविशते मम्मटः, तत्र सचेतसामेव प्रामाण्यमूरीकर्तुमीहते––'सचेतस एवात्र प्रमाणम्' (२९७) इति । एवं गुणगणगरिष्ठस्य काव्यप्रकाशकारस्य कृतेर्व्याख्यानार्थमहमहमिकया शतशो मूर्द्धन्या मनीषिणः प्रवर्तेरंश्चेन्नात्र किमप्याश्चर्यम् । तत्र रुय्यकः, विश्वनाथः, जगदीशः, नरसिंहः, कमलाकरभट्टः, नागोजिभट्टः, माणिक्यचन्द्रः, सोमेश्वरः, बलदेवभूषणः, सारस्वततीर्थः, जयन्तः, गोकुलनाथः, भवदेवमिश्रः, गुणरत्नगणिः, गोविन्दठक्कुरः, श्रीवत्सलाञ्छनभट्टाचार्यः, सुबुद्धिमिश्रः, सरस्वतीतीर्थः, वैद्यनाथः, वेणीदत्तशर्मा, भीमसेनदीक्षितः, जयरामो न्यायपञ्चाननः, महेश्वरभट्टाचार्यः, परमानन्दचक्रवर्ती, श्रीवत्सः, जनार्दनव्यासः, वामनाचार्यझलकीकर इति कानिचन प्रमुखाणां व्याख्याकाराणां नामानि समुद्ध्रियन्ते । तेषु परमानन्दचक्रवर्ती खल्वनितरसाधारणो व्याख्याकारो विश्लिष्य व्याख्याति ग्रन्थकम् । तद्व्याख्यानस्य कानिचन वैशिष्ट्यानीह प्रस्तूयन्ते ।

परमानन्दचक्रवर्ती पूर्ववर्तिषु व्याख्याकारेषु बहुशः समुद्धरति प्रत्यादिशति च मिश्रपदेन सुबुद्धिमिश्रं तन्मतं च यथा––मिश्राः (११); इति मिश्रमतम्, तदसत् (३०); मिश्रास्तु ····इति वदन्ति, तदपि न (५०); इति केनचित् प्रलपितं मिश्रेण, तदपास्तम् (५२); इत्यत्र तु क्वचिदज्ञातनामा मिश्रः संस्मृतः । मिश्रास्तु 'द्वयोः सम्बन्धानुपपत्तिर्लक्षणम्, विधेयाविमर्शे तु विधेयस्यैव तत्त्वानुपपत्तिः' इत्याहुः, तन्न (५३), अन्यादीनां निपातत्वेन स्वतन्त्रप्रयोगविरहान्न पदत्वमिति मिश्रादिभिर्यदुक्तम्, तन्न युक्तम् (६०);

इति मिश्रोक्तिर्मिश्रोक्तिरेव (६२) इत्यत्र कटाक्षः; इति यन्मिश्रेणोक्तं तन्न,⋯सम्मतत्वात् (६३); इति मिश्रोक्तं निरस्तम्, उक्तरीत्योपमान-परामर्शासम्भवात् ( ६६ ); क्वचित् तु 'गुणत्वाभिधानायेति मिश्रमत-मपास्तम् (६३); यत्तु अर्थभेदाच्छब्दभेदवच्छब्दभेदादप्यर्थभेद इति शब्दा-न्तरोपादानेऽर्थस्य नित्यताप्रतीतिरिति मिश्रैरुक्तम्, तन्न युक्तम् (६७); मिश्रास्तु ⋯⋯ वदन्ति, तदपि विरुद्धम् (६८); यत्तु परिमुक्तेत्यादि⋯⋯ इति मिश्रैरुक्तं तन्न (७३); मिश्रास्तु सामान्यतो⋯ ⋯वाक्यार्थप्रतीतिः, तन्न (८५); इति मिश्रमतमपास्तम् ( १०१ ); इति तु मिश्राः ( ११६ ); इति यन्मिश्रैरुक्तम्, तन्निरस्तम् ( १२३ ); मिश्रास्तु⋯ ⋯इति वदन्ति, तन्न,⋯⋯ समन्वितत्वाच्च ( १४६ ); इति मिश्राः,⋯⋯ तन्न,⋯⋯ शक्तिग्रहाभावात् (१४६); मिश्रास्तु ⋯⋯भेदमाहुः, तन्न ⋯⋯(१५४); न च कल्प्यते, न भेद इति मिश्रमतम्, तदसत् (१७३) इति।

रुद्रटं साहित्यदर्पणकारं विश्वनाथं रमानन्दं च समुद्धरति चक्रवर्ती क्वचिन्निरस्यत्यपि। यथा—तदुक्तं रुद्रटेन (१६८; २८७); यथोक्तं विश्वनाथेन ⋯ इति, तदज्ञानविजृम्भितम् (१८१); यदत्र 'वाच्या प्रतीयमाना सा ⋯⋯' इति विश्वनाथेनास्या भेदद्वयमुक्तम्, तदसत् (१९०); इति टीकाकृद् विश्व-नाथोऽपि 'आधिक्यमुपमेयस्योपमानान्न्यूनताथवा' इति लक्षितवान्, तन्न ( २२७ ) इति। टिप्पणीकारं रमानन्दं स्मरति--रमानन्दटीप्पणीवत् (१५१) इति। केचित्तु-मतगर्भे दीपिकाकृतः समुद्धृताः—'केचित्तु–एकस्मिन् वाक्ये ⋯ इति दीपिकाकृतः प्रकाशितवन्तः' (२०४) इति।

क्वचित्तु टीकाकारस्य टीकाया वा नामधेयमनुल्लिख्य सामान्यतष्टीका-कृच्छब्देन तन्मतानि व्यज्यन्ते। यथा-- नन्वाख्यातवाक्यानां ⋯ ⋯ कथं वाक्यदोषतेत्यत्र टीकाकृतः—व्यजेष्ट⋯⋯सर्वपद्याभिधानमित्याहुः (२५); इति टीकाकृतः प्रलपन्ति, तन्न (२६); इति टीकाकृतः ⋯ तेषा-मयमाशयः (८६) इति। क्वचित्तु पञ्चविधत्वमुक्तं प्राचीनैः (१४६) इति; प्राचीनैरनादृतत्वात् (१७६) इति च प्राचीनपदेन तन्मताभिव्यक्तिः। एकत्र गुरुमतं समुल्लिखितम्—'गुरुमते चानुमितस्य' (२६); यदत्र नव्योक्तिः सा चिन्त्या (५७) इति नव्यमतमालोचितम् इति।

केचिद्, अन्ये, केचित्तु, यत्तु, यच्च, कश्चित्, केनचित्, चिन्त्यम् इत्यादिभिः पदैर्विस्तारिकाकृता प्राचीनपरम्पराशैल्या कस्यचिन्नामो-

ल्लेखमन्तरा मतानि समुद्धृत्य समालोचितानि। क्वचित्तु 'ननु' 'न च' इत्यादिप्रश्नोत्तरदिशा प्रत्याख्यानं कृतम्। तथा—अत्र केचिद् वाक्ये समाप्ते सति ……विशेषणमित्याहुः, तन्न (५०); अन्ये तु समाप्तं पुनरुपात्तं वदन्ति, तदप्यसत् (५०); केचित्तु 'समन्वय' इति पाठमसङ्गतं पश्यन्तोऽसमन्वयं इति मन्यन्ते, तन्न, उक्तरीत्योपपत्तौ पाठान्तरकल्पनानौचित्यात् (५३); केचित्तु……इति प्रलपन्ति, तन्न (६०); तदुक्तम्—'न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते' इति, तच्चिन्त्यम्, पदज्ञानात् सम्बन्धिनः पदार्थस्योपस्थितेः, न तु पदस्यातिप्रसङ्गात् (६७); यच्च पाठभेदे ……तदसत् (६७); अत्र केचित् पुत्रश्च दुहिता चेत्येकशेषेण ……इत्याहुः, तन्न (६८); अत्र सत्यपीत्यादि केचित्, न वयम् (६९); अत्र चाभिधानादिति कश्चित्, तन्न (७४); अत्र केचिदसूयका……वदन्ति, दूषणमिदमुद्धरन्ति, तदसत्… (७६); यत्तु 'जगृहे … ' तद्धितार्थो बहुवचनश्च पुनरुक्त इति गतम्, तन्न (७७); केचित्तु ……इत्याहुः (८२; १०६; १७९); अत्र केचित् …इत्याहुः, तत्र …मानं मृग्यम् (६८); इति यदुक्तं तदसत् (९८); केचिदत्र…इत्याहुस्तन्न (१४४); यत्तु ……तन्न (१४६); अत्र केचित् (१८१; १८३); अत्र केचित्……इत्याहुस्तन्न (१८६; १९३; २१७; २२१); यत्तु पादत्रये …… सम्बन्धमाहुः, तन्न (१९५); यत्तु……इत्याहुः, तदसत् (१९६); यच्च…… तदपि प्रलपितम् (२०४); यत् केनचिदुक्तम्, तन्न (२०४); भेदमाहुः,……तदप्यशुद्धम्, (२२१); यत्तु तीक्ष्णत्वजातेः……तन्न (२३७); यत्त्वपराधद्वये……, तन्न (२४३); यत्त्वन्यधर्मस्यान्यत्र … …इति तन्न (२७५); यत्तु स्वरूपे…… इति तन्न; अत्र संकर इति केचित् (२८२); यत्त्वौपम्या … …तन्न (२८४); यत्तु लिङ्गवचनभेदश्च……इति तन्न (२९४) इति।

यद्यपि पाणिनीयस्य व्याकरणस्य वेदाङ्गत्वं सर्वैरेव विद्वद्भिरूरीक्रियते, तथापि वङ्गादिप्रदेशेषु सपदि लौकिकसंस्कृताभ्यसनाय कातन्त्रव्याकरणप्रचारः कदाचित् परां कोटिमाससादेति काव्यप्रकाशविस्तारिकायां परमानन्दचक्रवर्तिना क्वचित् क्वचित् पाणिनीयव्याकरणविवरणप्रसङ्गे संस्कारवशात् कातन्त्रव्याकरणस्य सूत्राणि समुपन्यस्तानि। क्वचित् तु तेनोभयोर्व्याकरणयोः पार्थक्यशो विवेचनमनुष्ठितम्। यथा— ईदूदेद्द्विवचनं प्रगृह्यम्' इत्यधिकारे 'प्लुतप्रगृह्या अचि' इति सन्धिनिषेधः। आदिशब्दाद् 'बहुवचनममी' 'विसर्जनीयलोपेन पुनः सन्धिः' 'अयादीनां यवलोपः'

इत्यादिपरिग्रहः (४१)। इह सम्पादकेन 'एतान्यपि कातन्त्रसूत्राणि टीकायाम्, अन्तरालवाक्ये तु पाणिनीयानुशासनोल्लेख इति तु विचित्रः पन्थाः' इति। विस्तारिकाकारस्य व्याकरणशास्त्रनिष्णातता कैश्चिदुदाहरणैर्निरीक्ष्यतामिह —'वृधातोर्वृतधर्मवृगाभ्योऽन्यत्र वचधातोः पुनरन्तितसोर्लोटः प्रथमपुरुषैकवचने, जिधातोः अदधातोश्च भाषायामन्यत्र प्रयोगो व्याकरणे निषिद्धः (८); न च तदपेक्षया धातुकार्यं गणपठितस्यैव धातुत्वात्। अत एव संग्राम युद्ध इति गणपठिते समुदाये धातुकार्यम् (१२); व्याकरणसंस्कारस्य पद एवेति तत्रच्यवस्यापि तत्रैवेति च्युतसंस्कृतेर्न वाक्ये सम्भवः (२४); 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र च्युतसंस्कृतेर्वाक्यगामित्वम्। आङो हनः स्वाङ्गकर्मकस्यात्मनेपदविधानेन पराङ्गकर्मकेऽत्र नियमोल्लङ्घनस्य 'आजघ्ने विषमविलोचनस्य वक्षः' इत्युभयपदाश्रयणेनेति वाच्यम्, हन्त्यात्मनेपदयोरेवानुशासनोल्लङ्घनात्। प्रकृतिप्रत्यययोरेव ...... दोषानुवृत्तेः (२४); कर्तृगतफलाविवक्षायामपि कातन्त्रेणात्मनेपदव्युत्पत्तेर्नासाधुत्वं व्याकरणव्युत्पत्तिसामान्याभावस्यैव च्युतसंस्कृतत्वात्। कर्तृगतफलाविवक्षायामात्मनेपदप्रयोगं केवलं वृत्तपूरणायेति दोषः (३९); 'संहितैकपदे नित्या नित्या धातूपसर्गयोः' इत्यतोऽग्रवर्तिनोः 'नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' इति चरणयोः स्थाने विस्तारिकायाम्—'सूत्रेष्वपि तथा नित्या सैवान्यत्र विभाषया' (४४) इति निर्दिश्येते चरणौ।

कातन्त्रव्याकरणमाश्रित्य विस्तारिकाकारेण विसर्गलोपोत्तरं पुनः सन्धेर्विषये विमर्श इत्थं कृतः—अत्र 'द्विवचनमनौ इति सन्धिनिषेधात् स्वरयोर्विश्लेषः। विसर्गलोपे पुनःसन्धाननिषेधः सौत्रः। एवं 'निजवंश उदात्तः' इत्यत्र 'यलोपेऽयादीनाम्' इत्यादिना अकारोकारयोर्विश्लेषणम् (४४) इति। यत्तु 'यथा वेत्यादिना विसर्गलोपस्यापि सन्धिभेदत्वं दर्शितम्, लुप्तविसर्गत्वस्य पृथगुपादानं प्रपञ्चाय' इत्युक्तं तदसत्, ......सूत्रपारतन्त्र्येण (४४) इति। अप्यादीनां निपातत्वेन स्वतन्त्रप्रयोगविरहान्न पदत्वमिति मिश्रादिभिर्यदुक्तम्, तन्न युक्तम् (६०); यत्तु 'जगृहे ......' तद्धितार्थो बहुवचनश्च पुनरुक्त इति मतम्, तन्न, जनपदोत्तरतल्प्रत्ययस्यैव समूहार्थत्वात् (७७); स्वार्थे ष्यञ् बहुव्रीह्यनन्तरं भावे वा (८१); घोषपरे सकारे विसर्जनीयलोपः ? (१५२); प्रत्ययो विभक्तीतरः, विभक्तिः सुप्तिङ् (१५४); अत्रैकत्रैव तिङि स्यादित्युत्तमपुरुषैकवचनयोः प्रत्यययोः श्लेषः (१५७);

नपुंसकस्य मुखपदस्य लिङ्गग्रहणम् 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति पाणिन्यनुशासनात्। वस्तुतस्तु ······(१७२); स्वार्थे मयट् (१७६); क्यच्क्यङ्णमुल:, कलापमतेऽपि इन्नायिणम: (१७९); कर्माधिकरणोत्तरत्वेन क्यचो द्वैविध्यमिति भाव: (१७९); णमुलोऽप्युपपदभेदात् तथात्वं कर्तुरुत्तरत्वेन क्यङोऽपि पार्थक्यमित्याह······(१८०); क्यजादीनामप्यौपम्यार्थत्वेन······(१८१); राजा कुञ्जर इव 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनेन समास: (१८१); इति कातन्त्रवृत्ति: (१८३); क्विपमनुशिष्य······(१८२) इति।

परम्परया विद्यतेऽत्रेति व्युत्पत्त्या परम्परितमिति ठप्रत्यय: (१९८) इति। पाणिनीयव्याकरणदृशा त्वत्र ठप्रत्यये सति परम्परिकमिति साधु। अनासादितमित्यत्र नपुंसकत्वमेकत्वं च, नपुंसकमनपुंसकेनेत्यनुशासनात् (२२५); द्वन्द्वात् परं श्रूयमाणस्य विषयपदस्य प्रत्येकं सम्बन्ध: (२३१); अत्र पक्षे णिजर्थान्तर्भावो नास्तीति विशेष: (२४२); कर्मणि षष्ठी (२६७); नपुंसकानपुंसकयोर्नपुंसकमिति न्यायात् (२८२); तथाहि 'असदृश:' इति **पाणिनि**मते कञन्तत्वात्, **कलाप**मते दृगन्तत्वादेकवचनान्तक्विबन्तत्वाद् बहुवचनान्तम्। एवम् 'मधुरतामृत:' इत्यपि······ क्विबन्तत्वाद् बहुवचनम्। एवं दधत इति दधृ धारणे इत्यात्मनेपदैकवचनान्तस्य दधातेश्च बहुवचनान्तस्य रूपमिति सर्वत्र साम्यमिति (२९४); आशीर्विहितलोट्······(२९५) इति।

कात्यायनवार्त्तिकं टीकायामस्यामुद्धृतम्। तस्य स्वरूपमुपलभ्यमानवार्त्तिकपाठान्मनाग् भिन्नं विलोक्यते। यथा—"सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' इति वार्त्तिकम्। पाणिनिसूत्रम्" इति (१८४)। उपलभ्यमाने वार्त्तिकपाठे 'बहुव्रीहि:' इति नास्ति।

काव्यप्रकाशविस्तारिकाया: कानिचन स्थलानि विचारणीयानि सुधीवरै:—क्रीडागृहाणि (१८७), मुनिर्नारायणाख्य: (१९४); रकारबाहुल्यात् (१४५) इत्यादीनि।

व्याख्याकृतो ज्ञानं ग्रन्थकृज्ज्ञानापेक्षया विस्तृतं स्यादिति विदन्त्येव कोविदा:। ग्रन्थग्रन्थिस्फोरणपूर्वकं पदपदार्थविवेचनं नाम कस्याश्चिदपि व्याख्याया आद्य: पण:। प्रसङ्गेऽस्मिन् वेदवेदाङ्गन्यायमीमांसापुराणादी-

नामष्टादशविद्यानां कामशिल्पशास्त्रादिसहितानां यथाव्याख्येयग्रन्थं यथा-प्रसङ्गमुद्धरणानि व्याख्याकृद्भिरुपन्यस्यन्ते। सम्पूर्णं संस्कृतवाङ्मयं काव्य-शास्त्रस्योपजीव्यमिति तद्विभावयितृभिस्तट्टीकाकारैश्चांशतः साकल्येन वा तज्ज्ञायते। इह विस्तारिकाकारेण ग्रन्थग्रन्थिर्विमृष्टः सम्यक्। पदपदार्थ-विवेचनप्रक्रमे समग्रे ग्रन्थे पद्यगतपदानामन्वययोजना नाम प्रथमो विशेषः। यथा – कातर्यमित्यन्वयः (३१ ; उदधिसदनमित्यन्वयः (३९); प्रत्येकमन्वयः (४७); अन्वयबोधे न विलम्बः (५२); अन्वयोपपत्तौ (५२); अनेनान्वयः (५६);······· इत्यन्वयः (५९;६४;६५;१२०;१३३); नञो विलम्बेनान्वयः (६१); झटित्यन्वयः स्यात् (६२); नार्यः शशंसुरित्यन्वयः (६९); यातेत्यन्वयः (७४); सम्भ्रमेणेत्यन्वयः (७६); स्त्रीरत्नेनैवान्वयः (८७); वृथाकर्तुमित्यन्वयः (१००); नाधमेनेत्यन्वयः (११०); इत्यादीन्युदाहरणानि समासेन निदर्श्यन्ते।

पूर्वपक्षमुपस्थाप्य मतान्तराणि चोपन्यस्य व्याख्याकारेणेह सोहापोहं विवेचितम्। यत्र ग्रन्थनिष्कर्षः स्वाभिप्रायो वाऽऽविष्कृतस्तेन तत्र—इति तत्त्वम् (२२;२८४); वस्तुतस्तु (२५;५६;६९;७०;९६;२०४;२९८); अयमर्थः (३१;४१;१९२); इति भावः (४३;१३२;३३;३७;३८;४५;८४;८५;८८;९०;९५;९७); अयमाशयः (८६;१२०); इत्यर्थः (१०४;२६;२८;३१;३५;८५;८७;९७); अस्मन्मते तु (१९६); इत्यभिप्रायः (१३०); इति तात्पर्यम् (२४८) इत्यर्थो बोध्यः (२८६); इति फलितोऽर्थः (२६१); इति ध्येयम् (२९१;६२;९८); इदमत्राभिसंहितम् (३००) इत्येतादृशानि प्रयुक्तानि पदानि।

विस्तारिकाकारेण क्वचित् क्वचित् काव्यप्रकाशस्यापरिपूर्णजिज्ञासेषु स्थलेषु 'इति शेषः' 'इति पूरणीयम्' इत्युक्त्या स्ववैदुष्यप्रतिभाप्रकाशनपूर्वकं परिपूर्तिर्विहिता। यथा—इति रुद्रटादिभिरुक्तमिति शेषः (२४८); 'सन्देह-प्रतिबन्धः' इति शेषः (२८६); श्लेषालङ्कारप्रकरणे नवमोल्लास इति शेषः (२८७); 'अधिकस्य' इति पूरणीयम् (२८८); 'विशेषदर्शनकालेन' इति शेषः (२९९) इति। एकत्र तु परमानन्दचक्रवर्तिना काव्यप्रकाशकारोऽपि पर्या-लोचितो यथा—'प्रमुदित इति पाठे तु संयोगप्रथमवर्णस्य पाठविलम्बेन गौरवोत्पत्तेः' (४६) इति। ग्रन्थमननुसन्धाय ये टीकारचनाप्रवृत्तिमाश्रयन्ते टीकाकारास्तान् प्रति विस्तारिकाकारेण खेदः प्रकाशितः प्रबोधिताश्चापि ते। यथा—ग्रन्थस्य पूर्वापरमननुसन्धानाष्टीकाः कुर्वन्तीति मनसि खेदः (२०४ ; अविद्वांसश्चेतयितव्याः (२०८) इति।

ग्रन्थविश्लेषणप्रक्रमे विस्तारिकाकारः क्वचित् क्वचित् सन्दर्भमपि समुपन्यस्यति ग्रन्थहृदयमाविर्भावयन्निव यथा—'साम्प्रदायिकमतमाक्षिपति—न त्विति (१२०); क्विपमनुशिष्यैतच्छ्लोकमाहुस्तन्मते उदाहरणमिदम् (१८२); 'केचिद् ·····मन्यन्ते, तन्निराचष्टे—लिम्पतीव' (१६०) इति; इति प्राचां मतं दूषयति—हेतुमतेति (२५४); प्राचामुदाहरणं समर्थयति—अविरलेति (२५४); अलङ्कारसर्वस्वकारीयामुपपत्तिं दूषयति—योऽलङ्कार इत्यादि (२८७) इति। अनेकत्र तु टीकाकारः काव्यप्रकाशे 'केचित्तु' इत्यादिपदैः समुल्लिखितानां मतानां विवरणे प्राक्तनानामाचार्याणां नामानि न स्फोरयति—केचित्तु (२२७) इति। विषयस्पष्टीकरणाय टीकाकृता नरसिंहपुराणम् (२४); कामशास्त्रविषयः (९४); गोरक्षसंहिता (६७) (इयं पञ्चषवर्षेभ्यः प्रागनेन विश्वविद्यालयेन प्रकाशिता); योगिनीतन्त्रम् (९७) (इदमप्यस्माद् विश्वविद्यालयात् प्रकाशितम्); अग्निपुराणं च (१६३) इति।

विस्तारिकाकारेण पाठालोचनं विशेषतोऽवहितम्। पाठनिर्धारणाभावे पदपदार्थनिश्चयविधौ नूनं समुपतिष्ठन्ते विप्रतिपत्तयः। बहुशो विपरीता अर्था अपि संक्रामन्ति तत्र तत्र। कासु स्थितिषु कुत्र च पाठविवेचनं विधेयमिति जिज्ञासूनामुपकाराय कानिचन निदर्शनानि प्रस्तूयन्ते—इति सुगमः पाठः (३२); इति पाठे दोषप्रसङ्गात् (५१); पाठान्तरेण स्वरूपायोग्यत्वेन निश्चायितम् (५४); कृतवत इति पाठे दूषणमामनन्ति, तदपि प्रलपितम्, सर्वत्रैव पाठकल्पनाया दोषोद्धारपरत्वात् (५७); विषयेति पाठे वैशिष्ट्यमर्थः (६५); तथैवेति पाठे 'आपाततः' इति शेषः (६७); अत एव शोधकपाठे लग्नतापदावृत्तिः, तदिति शोधकमात्रं न पाठकल्पकम्, छन्दोभङ्गापातात् (६९); कर्षकं नीवीरूपकम् इति पाठे शरीरम् (७७); यत इत्यपि पाठः (७८); रेहापाठे रेखामर्यादा (१०३); प्रमोदपाठे न दोषः (१०५); काम्यन्त इति कामा विषयाः। रामा इत्यपि पाठः (११२); अन्योन्येत्यपि पाठः सुगम

एव (१३८); अद्रिजेति, अद्रिमेति सम्यक् पाठः, जनन्या उमेति निषेधेन तथा प्रसिद्धेः (१६४); कुपितारुणेत्यपि पाठः (१७६); अत्र केचित् कव्ववेति पाठे……इत्याहुः (१७९); उत्फुल्लं वेत्यपि पाठः (१८२); जीवतिपाठे जीवितावधिपाठे कदाचिदित्यर्थः (१८९); तिर इति पाठे तिर्यगित्यर्थः (१९२); 'वडभौ' इति पाठान्तरम् (२१३); अन्तरिति पाठान्तरम् (२१६); पूर्वदोषपरिहाराय 'समाप्ते' इत्यपि पाठकल्पनम् (२२५); इति क्वाचित्कः पाठोऽपि (२४८); क्वचिद् वावय इति पाठः (२७८); क्वचिदुल्लापिनीति पाठः (२८६) इति।

केषाञ्चन विशिष्टानां शब्दानामर्था व्युत्पत्तयश्चापि निर्दिश्यन्ते व्याख्याकृता यथा—उपनिषद् = रहस्यभागः (११०); रुहरुहिका = सरभसौत्सुक्यम् (१८०); कार्मणकर्म = वशीकरणोपायः (१९८); सौकुमार्ये 'लडहत्तणअ' इति देशीवर्तने (२१६); कुकूलम्=कुम्भकारपचनम् (२६२); हूणः= पाश्चात्त्योऽतिगौरो यवनविशेषः (१३४) उट्टङ्कितम्=प्रकाशितम् (२०३); परिणमति=प्रादुर्भवति (२०३) इति। अपत्यशब्दस्य व्युत्पत्तिरित्थं प्रदर्श्यते चक्रवर्तिना परमानन्देन—'पतति वंशो येन तत् पत्यम्, न पत्यमपत्यमिति व्युत्पत्तिविरहात्……' (६८) इति। भानुजिदीक्षितेन तु—'न पतन्ति पितरोऽनेन,…बाहुलाकाद् यः, अघ्न्यादिः ( उ० ४।११२ ) वा' इति व्युत्पादितोऽपत्यशब्दः। स्वस्मिन्नात्मनि प्रकृतौ तिष्ठन्ति ते स्वस्थाः ( ९५ ) इति।

व्याख्याकारेण न केवलं शब्दार्थ एवावध्यातः, अपि तु क्वचिद् ध्वनिरपि समुदाहृतः शब्दस्य। यथा—'शुना सहास्य स्पर्द्धाबन्धो नोचित इति ध्वनिः ( ३९ ); तत्परशुना त्वामपि खण्डयिष्यामीति ध्वनिः' ( ४३ ) इति। भाषाप्रयोगच्छटाया अपि केचिदंशा निभाल्नीयाः—अत्रेदमालोचनीयम्…इति सन्देहसाहित्यम् ( १६१ ); इति मिश्रोक्तिर्मिश्रोक्तिरेव (६२); इत्यलं प्रतिष्ठितवचोविचारेण ( ६९ ) इति।

अत्र पेलवशब्दस्याऽऽद्याक्षरद्वयं पुंव्यञ्जनप्रत्यायकम् ( ४० ) इति सम्यग् व्याख्यातो विस्तारिकाकारेण ग्रन्थः। काव्यप्रकाशकारेण लोकभाषादृष्ट्या तत्राश्लीलता प्रादर्शि। प्राकृतभाषायां हिन्दीसाहित्ये च नायं शब्दस्यांशोऽश्लीलतामवद्योतयति। हिन्दीसाहित्ये तु तुलसीदासेन पेलशब्दस्य भूयिष्ठा रुचिराः प्रयोगाः समनुष्ठिता रामचरितमानसादौ। यथा— 'भोरेहुं भरत न पेलिहहिं' ( रामचरित० ); 'भारी भीर ठेलि-पेलि' ( कविता० ); 'ढकनि ढकेलि पेलि सचिव चले लै ठेलि' ( कविता० ) इति। किन्तु लोके शब्दोऽयं 'काकपेया नदी' इतिवत् कदाचिदश्लीलतामपि प्रकटयति। एवं तावत् संस्कृतविपश्चिद्भिः पदस्य कश्चिदंशो लोकभाषास्वश्लीलतया लभ्यते चेत् काव्ये त्याज्यतया नाङ्गीक्रियते। 'चलण्डामरचेष्टितः' 'रुचिं कुरु' इत्युभयत्र शब्दांशौ प्राकृतादिभाषासु पुंव्यञ्जनवराङ्गबोधकौ ( ४५ ) इति व्याख्याकारो ग्रन्थं व्याख्याति साधीयः। शब्दांशाविमौ प्राकृतभाषाग्रन्थेषूपलभ्यमानेषु नालोक्येते। हिन्दीभाषायामधुनाऽऽद्यशब्द एव श्रूयते, नान्तिमः। मन्ये काव्यप्रकाशकारकाले स कश्मीरादिभाषासु प्रयुज्यमानो भवेदिति।

एवं पुष्कलगुणगणविराजिताया विस्तारिकाख्याया अस्या व्याख्यायाः सम्पादनाय निबद्धादरैः सम्पादकमहोदयैः प्राच्यपाश्चात्त्योभयविद्याविशारदैः श्रीगौरीनाथशास्त्रिभट्टाचार्यैः प्रथमभागस्य सम्पादनोत्तरमयमस्या दुर्लभहस्तलेखाया व्याख्याया द्वितीयो भागो महताऽऽयासेन निर्वर्तितः। सप्तम उल्लासस्तावत् त्रयाणां हस्तलेखानां साहाय्येन सम्पादितः। तत्र पाठकैः ड० पु०, च० पु०, प० पु० इत्यादिसङ्केता लप्स्यन्ते। ग्रन्थग्रन्थिस्फोरणाय शास्त्रिवर्यैर्याः पादटिप्पण्यो विरचितास्ताभिस्तेषां साहित्यविषयावगाहनरुचिः पाण्डित्यप्रकर्षश्च विकचीभवतः। सप्तमोल्लासानन्तरमुपलब्धमेकमेव हस्तलेखमवलम्ब्यानन्योपायैर्विहितः साधीयो ग्रन्थरत्नस्यास्य सम्पादननिर्वाहः सम्पादकप्रवरैः।

अन्धतामसनिमग्नानामेतादृशदुर्लभग्रन्थरत्नानां सम्पादनेन संस्कृत-

साहित्यरत्नाकरो नूनं समेधितः शास्त्रिवर्यैः। सेयं साहित्यशास्त्रजिज्ञासु-संशयतारिका काव्यप्रकाशविस्तारिका सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन सरस्वतीभवनग्रन्थमालायाः षडुत्तरशतपुष्पतया व्याकोशमुपेता साम्प्रतं प्रकाशमानीयते। तस्या एतस्याः प्रकाशनेन चिरं प्रतीक्षमाणाः सुधीजना जिज्ञासुजनाश्च नूनं प्रीणिताः, उपकृताश्चेति दृढं प्रत्येति

वाराणस्यां<br>मकरसंक्रान्तौ २०३८ वैं०<br>( १४-१-८२ खी० गुरौ )

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**<br>निदेशकः<br>अनुसन्धानसंस्थानस्य

PREFACE

It is a matter of immense satisfaction that the second part of the edition of Mammaṭa's Kāvyaprakāśa with Paramānanda Cakravartin's commentary thereon entitled Vistārikā is printed off. The first part was published in 1975 A.D. As we mentioned in the introduction to the first part, the publication of this commentary was contemplated by our late lamented Professor Sivaprasad Bhattacharyya of Presidency College and the University of Calcutta. Unfortunately, he passed away before the work could be sent to the press. We prepared, however, the press-copy from several manuscripts and approached Sanskrit University, Varanasi, with the request to arrange for its publication. It may be mentioned in the context that the Sanskrit University had earlier published another commentary on Kāvyaprakāśa–Dīpikā of Caṇḍīdāsa, which was edited by Professor Bhattacharya himself during his life-time.

The work on the present volume was resumed by us in April last and during this short period it could be brought out through the assistance voluntarily offered by our colleagues in the departments of Sāhitya and Vyākaraṇa. Special mention must be made of the services of Pandit Parameśvara Pandey of the Publication department, without whose active participation the present volume could not have been seen through the press.

I must express my satisfaction at the speedy publication of this work for which I offer my blessings on the young scholar, Dr. Hariścandramaṇi Tripāṭhi, the Publication Officer of the University.

A word need to be mentioned here that we had to depend on only one manuscript from which the press-copy of this part was prepared. We have not spared ourselves in arriving at a fairly satisfactory reading and it is our hope that scholars will appreciate our endeavour.

Let us conclude by saying:

स्मारं स्मारं गुरोर्वाक्यं गहने पथि गच्छता ।
यत्किञ्चित् सेवितं तेन शङ्करो मे प्रसीदताम् ।।

Varanasi
28th December 1981

Gaurinath

# भूमिका

मम्मटाचार्यकृतकाव्यप्रकाशस्य आ च सप्तमोल्लासाद् आ च दशमोल्लासाद् द्वितीयो भागो विस्तारिकाव्याख्यया विभूषितो विद्वदपश्चिमानां करकमलानि सुशोभयतीति प्रसीदामि। षष्ठोल्लासान्तः प्रथमो भागः पूर्वं प्रकाशितो विद्वद्वरैर्न विस्मृतस्स्यादिति तर्कयामि। आलङ्कारिकैर्निर्मितस्य निकेतनस्य मम्मटाचार्याः स्तम्भभूता इत्यत्र न कस्यापि सन्देह इति सम्भावयामि। काव्यपुरुषस्य यावन्त्यङ्गानि तावन्त्यशेषाणि मम्मटाचार्यैः काव्यप्रकाशे निरूपितानि। मम्मटाचार्यः स्वोत्तरवर्तिनामालङ्कारिकाणां मार्गदर्शित्वेन विमलां कीर्तिमवापेत्यत्रेदमेव प्रमाणं यत्तैस्तैर्दार्शनिकैर्नैकविधास्सङ्ख्यातीताष्टीकाः काव्यप्रकाशस्य प्रणीता इति। आ च कुमारिकाया आ च हिमवतष्टीकारचयितारस्सर्वप्रान्तीया अजनिषतेत्यनितरसाधारणं महत्त्वमस्य ग्रन्थस्यावद्योत्यते। सङ्क्षिप्तैरेव शब्दैरतिगभीराणां विषयाणां प्रतिपादने पाटवं मम्मटाचार्यस्य काव्यप्रकाशेऽनुभवामः। यथा हि दर्शनानामनुशासकत्वेन शास्त्रत्वं तथैवालङ्कारग्रन्थानामिति स्वीये काव्यप्रकाशेऽपीति साधयन्ति मम्मटभट्टाः, विशेषतो व्याकरणे न्याये मीमांसायाञ्च परिपुष्टज्ञानवतामेव काव्यप्रकाशग्रन्थगतग्रन्थिभेदस्सुकरः। य एव तत्तद्दर्शनप्रकरणग्रन्थानधीत्य दार्शनिकपदार्थप्रेक्षान्वितमतयस्त एव काव्यप्रकाशाध्ययनेऽधिकारिण इति निस्सङ्कोचं वक्तुं शक्यते।

तत्र सप्तम उल्लासे दोषाः, अष्टमे गुणाः, नवमे शब्दालङ्काराः, दशमे चार्थालङ्काराः सविशेषं निरूपिता मम्मटाचार्यैः। काव्यपुरुषशरीरस्य शब्दार्थोभयात्मकस्य विशेषणं दोषाभावः। अभावज्ञानं प्रतियोगिज्ञानसापेक्षम्। अतः प्रतियोगिनो दोषस्य लक्षणं निर्दिष्टम्—'मुख्यार्थहतिर्दोषः' इत्यादिना ग्रन्थेन। मुख्यो योऽर्थस्तस्य हतिरपकर्षः, न तु नाशः, दोषयुक्तादपि काव्याद्रसास्वादानुभवात्। यद्यप्यत्र मुखमिव मुख्य इति यप्रत्ययान्तो मुख्यशब्दो वाच्यमप्याचष्टे, तथापि मुख्यशब्दो रसपर इत्याह—'रसश्च मुख्यः' इति। काव्ये प्राधान्येन प्रतीतिविषयत्वे मुख्यशब्दस्य तात्पर्यं सन्दर्भानुसारेणैष्टव्यम्। उद्देश्यत्वसामानाधिकरण्येन प्राधान्यमभ्युपयन्ति

मीमांसकाः। स्वर्गनिष्ठोद्देश्यतानिरूपिता विधेयता यागे, अतः स्वर्गः प्रधानं यागश्च विधेयोऽप्रधानम्। काव्यञ्च विशेषतस्सद्यः परां निर्वृतिमुद्दिश्य विधीयत इति परायां निर्वृतावुद्देश्यत्वं प्राधान्यञ्चावतिष्ठेते, विधेये च काव्ये शब्दार्थोभयात्मके विधेयत्वसामानाधिकरण्येनाप्राधान्यमवतिष्ठते। यथा हि स्वोपकारकत्वेन स्वर्गादिर्यागादिकमपेक्षते, तथैव परा निर्वृतिरपि स्वोपकारकत्वेन शब्दं तदर्थञ्चापेक्षते। तदिदमुक्तम्—'तदाश्रयाद्वाच्यः' इत्यादि। स्वर्गापेक्षया यागस्याप्राधान्येऽपि प्रयाजाद्यङ्गापेक्षया यागस्य प्राधान्यमपीष्यते, तथैव शब्दस्यार्थस्य च रसापेक्षयाप्राधान्येऽपि गुणालङ्काराद्यपेक्षया शब्दार्थोभयात्मकस्य काव्यस्य प्राधान्येन काचिद् व्याहतिः, किन्तु प्रयाजाद्यङ्गेषु तदनुष्ठानसाधनीभूतमन्त्रोच्चारणादौ यदि कदाचित् किञ्चिद्वैकृत्यमुपजायेत, तर्हि केवलमङ्गान्येव दुष्टानीति न पर्यवस्यति, उद्देश्यस्य स्वर्गादेर्व्याघातो जायते, तथैव काव्याङ्गेषु शब्दादिषु तदङ्गेषु च गुणालङ्कारादिषु दुष्टेषु परमस्योद्देश्यस्य निर्वृतिरूपस्य हतिर्जायेतैव। अतश्च 'उद्देश्यप्रतीतिविघातकत्वं दोषत्वम्' इति दोषसामान्यलक्षणं पर्यवस्यति। ते च दोषा नैकविधाः परिगणिताः। तत्र 'दुष्टं पदम्' इत्यादिना षोडश दोषान् पददोषत्वेन परिगणय्य तेषु च्युतसंस्कारमसमर्थं निरर्थकमिति दोषत्रयमुत्सृज्य शिष्टानां त्रयोदशानां वाक्यदोषत्वम्, एतेषु कतिपयानां पदांशदोषत्वमिति निर्दिशति। एवं निर्दिशतां मम्मटाचार्याणामयमाशयः—प्राय आलङ्कारिकाः किमप्येकमेव दर्शनमवलम्ब्य न गच्छन्ति, यत्र यस्योपादाने निरूपणीयविषयस्य सङ्गतिमुपष्टम्भञ्चावधारयन्ति तत्र तत्परिगृह्य विवेचयन्ति विषयान्। अत्र मम्मटाचार्यस्यानितरसाधारणं कौशलमनुभवामः। श्रोत्रग्राह्ये वस्तुनि शब्दशब्दं व्यवहरन्ति मीमांसकाः। 'कश्शब्दः ? यः श्रोत्रेण गृह्यते' इति मीमांसाभाष्यकाराः श्रीशबरस्वामिनः। अनन्तरम् 'अथ गौः' इत्यत्र कः शब्दः ?' इति पृष्ट्वा 'गकारौकारविसर्जनीयाः' इति प्रश्नं समादधते। अनेनेदं निर्गलति यच्छब्दशब्दो वर्णेषु, तत्समुदाये पदे, तत्समुदाये वाक्ये च प्रयुक्तो भवतीति। इमां सरणिमाश्रित्य वर्ण-पद-वाक्यदोषाः प्रवर्तिताः। तत्र पदगतवर्णे दोषयुक्ते तद्घटितं पदं तद्घटितञ्च वाक्यं दुष्टं भवतीति पृथक् पदवाक्यदोषाणां निर्देशः कस्मै फलायेति समुदियाच्छङ्का। अत्रैवं दृष्टिः प्रसारणीया भवति—सामुद्रिकसर्वलक्षणोपेता सर्वाङ्गसुन्दरी करे वा पादे वैकयाऽङ्गुल्या विहीना क्वचिज्जनिमवाप्तवती सौन्दर्येण विहीना न परिगण्यते—'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति

न्यायात् । यदि चैका तादृशलावण्यवत्यपि छिन्ननासिका भवेत् तदा सुन्दरी न परिगण्यते—'स्यात् सुन्दरमपि वपुः श्वित्रेणैकेन दुर्भगं भवति' इति न्यायात् । एवमेव कवितानार्यपि । काव्यपुरुषस्यापीयमेव स्थितिः । दोषाणामल्पत्वभूयस्त्वनित्यानित्यत्वप्राधान्याप्राधान्यौचित्यानौचित्यादिविवेकेन निश्चयः क्रियते ।

किञ्चात्र मन्त्रोहन्यायसञ्चारेण निर्णयः कर्तुं शक्यते । तथाहि प्रकृतितः कार्यमुखेन विकृतौ प्राप्तस्य मन्त्रस्यान्यथाभावात्मक ऊहः क्रियते मीमांसकैः । ऊहितस्य च भागस्य पौरुषेयत्वं स्वीक्रियते । अन्यथाभावश्च क्वचित् पदस्य, क्वचिद्विभक्तेः, क्वचिच्च विभक्त्यर्थयोर्लिङ्गवचनयोरित्येवं नैकप्रकारो भवत्यूहः । तत्र य एवान्यथाभावमापन्नस्तस्यैव पौरुषेयत्वं न समग्रस्य पदस्य, नापि समग्रमन्त्रस्य । मन्त्रेषु हि पौरुषेयत्वं दोषाय परिगण्यते । अनेन न्यायेन 'दृशः' इति वक्तव्ये 'दृशाम्' इत्युक्ते पदांश एव दुष्टः, न तु पदं दुष्टम्, नापि तद्घटितं वाक्यं पद्यं वा । किञ्च पदांशमुद्दिश्योपदिष्टो दोषः पदेऽतिदेष्टव्यः। पदमुद्दिश्य च विहितो दोषो वाक्येऽतिदेष्टव्यः । अतिदेशश्चाकाङ्क्षावत्येव भवति । न हि पदं वाक्यं वा दोषमाकाङ्क्षति येन तत्र दोषोऽतिदिश्येत । अतश्च पदांशोद्देशेन विहितो दोषः पदांशदोषः, पदोद्देशेन विहितश्च पददोषः, एवं वाक्यदोष इति दोषाणां विविक्तविषयताऽभ्युपगन्तव्या । एवञ्च पदांशदोषमात्रेण समग्रस्य पदस्य वाक्यस्य वा न दुष्टत्वं सिध्यति । एवं सविशेषं दोषाणां स्वरूपं सोदाहरणं प्रतिपाद्य काव्यशरीरं शब्दार्थयुगलं दोषाभावेन विशेषयति काव्यलक्षणे । काव्यानि रचयता कविना प्रथमं दोषेषु दृष्टिं निक्षिप्य तद्धानाय यतितव्यम् । तथा सति 'अपदोषतैव विगुणस्य गुणः' इति न्यायेन काव्यस्य गुणवत्त्वे सम्पन्ने किमिति गुणानां पृथक्सङ्कीर्तनमिति प्रश्न उत्थितो भवेत् । तत्रेदमुच्यते—रसाव्यभिचरितस्थितिमत्त्वं गुणानां लक्षणमुररीकृतमालङ्कारिकैः । न हि दोषाभावो रसाव्यभिचरितः, नीरसकाव्यस्यापि दोषाभाववत्त्वात् । अत एव गुणानां पृथक्सङ्कीर्तनमष्टम उल्लासे । माधुर्यादिगुणवति काव्ये केनापि रूपेण रसवत्त्वं साधयितुं शक्यम् । न खलु दोषाभावमादाय काव्यस्य रसवत्त्वं साधयितुं प्रवर्तेत कश्चन प्रेक्षावान् ।

यावदन्तरङ्गता रसेन काव्यस्यात्मना सह गुणानां तावदेव बहिरङ्गताऽलङ्काराणाम् । गुणा भवन्त्यात्मसमवेताः, अलङ्काराश्च शरीरसम्बन्धिनः ।

शमदमतितिक्षादिभिरात्मा परिपुष्टो भवति, न त्वलङ्कारैः कटककुण्डल-केयूरादिभिः । एवं सत्यपि केचनालङ्कारप्रिया अपि भवन्ति । तेषां तोषाय विविधा अलङ्कारा लोके प्रवर्तिताः । तथैव काव्यशरीरशोभायै नैकविधा उपमादयोऽलङ्काराः । काव्येषु वक्रोक्तय एवालङ्काराः । अलङ्काराणामेव प्राधान्यमास्थिषत वक्रोक्तिजीवितकारादयः । शमदमादिसम्पत्सम्पन्नोऽपि सम्प्रदायानुसारेण भस्मत्रिपुण्ड्रम् ऊर्ध्वपुण्ड्रं चन्दनं कुङ्कुमं वा धारयन् विशेषेण शोभते, न तु शून्यललाट इति नः प्रत्यक्षम् । इमामेव पद्धतिमनुसृत्यालङ्कारिका नैकविधान् अलङ्कारान् प्रवर्तयाम्बभूवुः, येषु केचनभेदघटिता अलङ्कारा उपमां मूलीकृत्याभेदघटिताश्चापरे रूपकमाश्रित्य प्रवृत्ताः । एवं सर्वाङ्गसुन्दरं काव्यपुरुषं प्रकाश्य मम्मटाचार्याः पुण्यश्लोका अद्यापि विराजन्त इति धन्यधन्योऽयं संस्कृतसमाज इत्युपसंहरन् विरमति ।

काश्याम्
मकरसङ्क्रान्तौ
सं० २०३८ वै०
(१४-१-१९८२ ख्रै०, गुरौ)

**श्रीगौरीनाथशास्त्री**

# विषयानुक्रमणिका

विषयः पृष्ठम्

# काव्यप्रकाशः

## [ उत्तरार्धः ]

( सप्तम - अष्टम - नवम - दशम - उल्लासाः )

काव्यप्रकाशविस्तारिकया

विभूषितः

# काव्यप्रकाशः

## [ उत्तरार्धः ]

### सप्तम उल्लासः

काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह—

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्यः ।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥ ४९ ॥**

हतिरपकर्षः । शब्दाद्या इत्याद्यग्रहणाद् वर्णरचने ।

---

॥ श्रीदुर्गेश्वरी विजयते ॥

अन्धा दोषान्धकारेषु के वा न स्युर्विपश्चितः ।
नाहं तु दृष्टिविकलो धृतचिन्तामणिः सदा[1] ॥ १ ॥

स्वरूपं ध्वन्यादिकं निरूप्येत्यवसरसङ्गतिसूचनम् । काव्यलक्षणे प्रागुपादानाद् दोषाणां प्राङ्निरूपणम् । सामान्यलक्षणं साधारणपरिचायकं प्रति विशेषेण लक्षणं विशेषणीभूयातिव्याप्तिवारकम् ।

मुख्यार्थेत्यादि । मुख्यार्थपदाभ्यां कर्मधारयः । मुख्यः—इतरेच्छानधीनेच्छाविषयः । तच्च सुखं परमपुरुषार्थत्वात् । तद् वक्ष्यति—रसश्च मुख्य इति । एवञ्च मुख्यत्वं सुखान्तरेऽप्यतिप्रसक्तमिति तद्वारणायार्थपदम् । अर्थत्वं शब्दजन्यसाक्षात्कारविषयत्वम् , काव्यादन्यतः शब्दान्न सुखस्य प्रत्यक्षता, किन्तु शब्दत्वमेव । शब्दे तज्जन्यप्रत्यक्षविषयतयाऽतिव्याप्तिवारकं मुख्यपदम् , उक्तमुख्यत्वस्य सुखादन्यत्रासम्भवात् । एतेन मुख्यस्य रसस्यार्थत्वाद् व्यभिचारात् परस्पराव्यवच्छेदेन न कर्मधारयः, अर्थपदवैयर्थ्यञ्चेति निरस्तम् । मुख्यपदेन रसस्य सुखत्वेनैव प्रतिपादनात् , न रसत्वेन ।

---

१. उपोद्घातेऽस्य तात्पर्यमुद्घाटितं टीकाभिः ।

हतिरपकर्षो न प्रतिबन्धः, दुष्टेष्वपि रसानुभवात् । अपकर्षस्तु रसनिष्ठजातिविशेषः, एकत्रैव शब्दे तारत्वमन्दत्वे इव स्वप्रकाशे रसे उत्कर्षापकर्यरूपो जातिविशेषः । व्यञ्जकदोषतदभावाभ्यां च तयोर्ग्रहः । मुख्यार्थापकर्षज्ञानजनकज्ञानविषयत्वं व्यञ्जकलक्षणम् । तेन स्वरूपसतो न दोषत्वम् । दोषज्ञानञ्च भ्रमप्रमासाधारणम्, श्रुतिकटुत्वादिभ्रमेऽप्यपकर्षस्यानुभविकत्वात् । न च तत्रापकर्षस्यापि भ्रमः, स्वप्रकाशस्य रसज्ञानस्य धर्मिग्राहकमानतः प्रमात्वेनैव सिद्धत्वात्, तस्यैवापकर्षग्राहकत्वात्, ज्ञानान्तरस्यानुपलब्धिबाधात् । न च जनकज्ञानस्य भ्रमत्वेन जन्यस्यापि भ्रमत्वं जन्य एवेति नियमात्, आस्वादस्याजन्यत्वात् ।

नन्वेवमभिधेयेऽर्थे मुख्यपदप्रयोगोऽर्थशब्ददोषविभागश्च न स्यात्, उक्तमुख्यत्वस्यापकर्षस्य च रसमात्रे वृत्तेरित्याह—तदाश्रयादित्यादि । आश्रयणमाश्रय उपायत्वेनापेक्षणम् । वाच्यो मुख्य इत्वन्वयः । एतेन वाच्ये विभावादौ भाक्तो मुख्यपदप्रयोगः । आस्वादोपायत्वञ्च दर्शितम् । रसो वाच्यश्च । उभयं शब्दाद्यास्तदुपयोगिनो विभावादिप्रत्याय्यरसप्रत्यायनात् । तेन रसोपायत्वेन । तेष्वर्थशब्दादिषु । स दोषः, न केवलं रसे इत्यपेरर्थः । गुणवद्दोषोऽपि साक्षात्सम्बन्धेन रसे, व्यङ्ग्यव्यञ्जकभावेन त्वर्थशब्दादिष्विति भावः । श्रुतिकटुत्वदुष्टत्वादीनां निरूपणं तु तद्व्यञ्जकताऽवच्छेदकत्वेनेति नार्थान्तरत्वम् ।

केचित्तु हत्यपकर्षदोषशब्दाः करणव्युत्पन्नास्तेन रसापकर्षको दोष इति पर्यवस्यतीति तन्न, उपोद्घाते दोषपदस्य भावव्युत्पत्त्या दूषकजिज्ञासाया अनुत्थापकत्वात्, भावप्रत्यायकत्वनियमाच्च ।

मिश्रास्तु "मुख्यायेदं मुख्यार्थमिति चतुर्थीसमासः । तच्च शब्दार्थयुगलं तस्य हतिरन्यथात्वं यस्य येन रूपेण व्यञ्जकत्वं तस्य तद्रूपप्रच्यवः । फलं तु रसस्य सम्यगनवभासः । अर्थशब्दयोर्मुख्यार्थत्वं दर्शयति- तदाश्रयादित्यादि । उपायत्वेनापेक्षणमाश्रय" इति व्याचक्षते । अत्र शब्दार्थयोः रसव्यञ्जकताऽवच्छेदकविरहो दोष इति पर्यवस्यति । तन्न चारु, रूपान्तरविरहेण दोषाभावगुणालङ्काराणामेव रसव्यञ्जकत्वावच्छेदकतया दोषानुप्रवेशेनात्माश्रयापत्तेः । किञ्च, दोषाभावस्यास्वादव्यञ्जकत्वे दुष्टेषु तदननुभवप्रसङ्गात् । यच्च 'फलं तु रसस्य सम्यगनवभासः' इति तदप्यसत्, विकल्पासहत्वात् । स तु यत्किञ्चिदवच्छेदेन प्रकाशकः सम्यगवभासस्याभावो वा ? नाद्यः, रसस्याखण्डत्वेनावच्छेदाभावात् । नान्त्यः[१],

१. नापर इति ङ० पु० पाठः ।

विशेषणलक्षणमाह—

**दुष्टं पदं श्रुतिकटुच्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।**
**निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥५०॥**

**सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।**
**अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव ॥५१॥**

---

सर्वत्र दोषस्य सुलभत्वेन सम्यगवभासस्याप्रसिद्धचा तदभावस्य निरूपयितुमशक्यत्वात् 'तेन तेष्वपि स' इत्यस्य वैयर्थ्यात् तदाश्रयादित्यादिनैव शब्दार्थयोर्मुख्यार्थत्वप्रतिपादनात् ।

अत्रेयं व्यवस्था—दोषा द्विविधाः शब्दनिष्ठा अर्थनिष्ठाश्च । वाक्यार्थप्रतीतेः पूर्वं प्रतीयमाना शब्दगाः, परतः परे । शब्दाश्रया अपि पदपदांशवाक्यगतत्वेन त्रिविधाः । अर्थगा अपि वाक्यार्थरसनिष्ठत्वेन द्विविधाः । रसस्य साक्षादपकर्षकत्वेन रसदोषाः, परम्परया त्वर्थे ।

तत्र प्राथमिकज्ञानविषयत्वेन शब्ददोषो निरूप्यते । वाक्यापेक्षया पदानां प्राथम्येन प्रथमं तद्दोषानाह—दुष्टं पदमित्यादि । न च पदापेक्षया पदांशस्य प्राथमिकत्वेन तद्दोषनिरूपणमेव पूर्वमुचितमिति वाच्यम्, पददोषाणामेव तत्रातिदेश्यत्वादतिदेशस्योपदेशसापेक्षत्वात् । पदांशोपदेशेन पदातिदेशे च पदांशावृत्तिपदवृत्तिदोषान्तरनिरूपणाय प्रकरणान्तरप्रसङ्गात् ।

विशेषलक्षणसौकर्याय विभागमाह—श्रुतिकट्वित्यादि । दुष्टं पदमिति प्रत्येकमन्वेति । पदत्वं चेतरनिरपेक्षस्वार्थोपस्थापकत्वम् । तच्च प्रातिपदिकस्य सुव्यक्तम्, उच्चारणमात्रेण स्वार्थप्रत्यायनात्, न तु विभक्तेः प्रत्ययस्य वा, प्रातिपदिकमपेक्ष्यैव तयोः स्वार्थप्रत्यायकत्वात् । अत एव प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्[१] । प्रातिपदिकादेस्तु साधुत्वार्थमेव हि विभक्त्याद्यपेक्षा, तेन प्रकृत्यवलम्बी पददोषः । प्रत्ययगतस्तु पदैकदेश इति विविच्य तत्र वक्ष्यामः ।

१. व्युत्पत्तिः प्रत्ययानाम् ।

श्रुतिकटु परुषवर्णरूपं कष्टम् । यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्गचा कार्तार्थ्यं लभते कदा ।।२४५।।

अत्र कार्तार्थ्यमिति ।

च्युतसंस्कृति व्याकरणलक्षणहीनम् । यथा—

---

परुषेत्यादि । कष्टं संयुक्तव्यञ्जनम् । तच्च मधुरेऽप्यतिप्रसक्तमिति परुषेत्यनेन तद्व्यवच्छेदः । परुषमोजोव्यञ्जकम् । ओजोव्यञ्जकत्वे सति संयुक्तव्यञ्जनवत्त्वमित्यर्थः । वीरवीभत्सरौद्रेषु अदुष्टतया तदतिप्रसङ्ग-वारणाय मुख्यापकर्षकत्वे सतीति विशेषणीयम् । इदमनुसन्धायैव तत्र तथा व्याख्यातम् । वीरादौ तु मुख्योत्कर्षकत्वाददोषत्वम् । पददोषाणां दूषकता-बीजं तु प्रकृते रसाननुगुणो [ प्रकृतरसाननुगुणतोत् ] त्पादकत्वम् । इदञ्च विशिष्य विवेचयिष्यामः ।

अनङ्गेत्यादि । यस्याङ्गनस्थितस्यापि विजयजननान्मङ्गलगृहम् । तरङ्गितमुत्तरोत्तराविच्छेदः । तरङ्गितैरिति करणमालिङ्गित इत्यत्रान्वेति । कार्तार्थ्यमित्यत्र परवर्णद्वयस्य श्रुतिकटुत्वम् । न च पदैकदेशगामिता, प्रकृतिप्रत्यययोर्द्वयोरप्यन्वयव्यतिरेकानुविधानात् । नापि सन्धिदोषता, प्रत्ययस्य पदत्वविरहात् । पदयोरेव सन्धानात् । लभत इति 'कदा' योगाद् भविष्यति वर्तमानता । प्रकृतविप्रलम्भाननुगुणौजोऽनुभावकत्वं बीजम् ।

व्याकरणेत्यादि । व्याकृतिर्व्याकरणं प्रकृतिप्रत्ययविभागः, तद्बोधकलक्षणं सूत्रम्, तद्धीनं तदविषयो व्याकरणव्युत्पत्तिविरहवदित्यर्थः ।

न च संज्ञाशब्दानां देवदत्तादीनां लडहादीनाञ्च देशीयानां संस्कृत-प्राकृतव्याकरणाव्युत्पादनादसाधुत्वं स्यादिति वाच्यम्, 'उणादयो बहुलम्' (पा० ३।३।१) 'लडहादयो बहुलम्' इति संस्कृतप्राकृतसूत्राभ्यां सामान्यतो व्युत्पादनात् ।

यत्तु 'व्याकरणेन लक्ष्यत इति व्याकरणलक्षणं साधुत्वम्, तद्धीनम-साधुत्वम्, न तु व्याकरणव्युत्पत्त्यभावः, संज्ञाऽऽदावतिव्याप्तेः' इति, तन्न, प्रकारान्तरविरहेण व्याकरणव्युत्पत्तेरेव साधुत्वेन संज्ञाशब्दादावति-व्याप्तितादवस्थ्यात् ।

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत् पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥२४६॥
( व० जी० २।२७ )

अत्रानुनाथत इति ।

'सर्पिषो नाथत' इत्यादाविवाशिष्येव नाथतेरात्मनेपदं विहितम् "आशिषि नाथः" (पा० २।३।२१वा०) इति । अत्र तु याचनमर्थः । तस्मात् 'अनुनाथति स्तनयुगम्' इति पठनीयम् ।

अप्रयुक्तं तथाऽऽम्नातमपि कविभिर्नादृतम् । यथा—

---

एतदिति । प्रत्यक्षपरामृष्टत्वेनापलपितुमशक्यम् । सुन्दरो युवा, क्षमं योग्यम्, करस्य तदव्यासङ्गेन धनुषस्त्यागात् स्यादेव प्राणरक्षणमिति भावः । पल्लीं पातीति पल्लीपतिः, तत्पुत्र्यास्तव भीतत्राणमुचितम् । अभ्यर्थना याचना, दीनं कातरम् । न चाशीरर्थः, त्वामित्यस्य कर्मताऽनुपपत्तेः । दृष्टार्थस्यैवाशंसनविषयत्वात् । तदाह—अत्र तु याचनमित्यादि । आत्मनेपदनाथत्योर्द्वयोरपि नियमोल्लङ्घनात् पददोषता । आत्मनेपदिगणपाठादेवात्मनेपदसिद्धेः पुनस्तद्विधानं नियमाय । नाथतेराशीरर्थे आत्मनेपदमेव, न परस्मैपदम् । अर्थान्तरे त्वनियमाद् याचनेऽप्यात्मनेपदमविरुद्धमिति व्याख्याय ग्रामग्राम इत्युदाहार्यमिति ब्रुवाणः कश्चिदस्य धातोरात्मनेपदित्वेन परस्मैपदाप्रसक्त्या नियमव्यावृत्त्यभावेन भीषयितव्यः । नाथधातोरात्मनेपदश्रवणादेव प्रकृतरसाननुगुणाशीरर्थाप्रत्यायनं बीजम् ।

कविपदं पण्डितपरम्, विद्वत्प्रयोगानर्हत्वमप्रयुक्तत्वम् । तर्थेति । येन रूपेणाम्नातमनुशिष्टं तेन रूपेणाप्रयोगेऽनुशिष्टत्वावच्छेदकावच्छिन्नप्रयोगाभाववत्त्वमप्रयुक्तत्वम्, तेन नातिव्याप्तिः । अन्यथा घटपदादावपि तत्त्वं स्यात्, पुंस्त्वादिनाऽनुशासनान्नपुंसकत्वादिना चाप्रयोगात् । असमर्थस्य हन्तेरुपसंदानेन वक्ष्यतीत्यादौ प्रयोगसंभवेन तत्सामान्याभावाभावान्न प्रसङ्गः । असाधौ नानुशासनम् ।

यथाऽयं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ।।२४७।।

अत्र दैवतशब्दो 'दैवतानि पुंसि वा' ( अ० को० २।२ ) इति पुंस्याम्नातोऽपि न केनचित् प्रयुज्यते ।

असमर्थं यत्तदर्थं पठ्यते, न च तत्रास्य शक्तिः । यथा—

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतः ।
सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम् ।।२४८।।

अत्र हन्तीति गमनार्थम् ।

---

न तु यत्किञ्चित् कविना यावता वा तेनाप्रयुक्तत्वम् । नाद्यः, एकस्य कवेः सर्वप्रयोगाक्षमत्वेन प्रयुक्तेष्वपि तत्प्रसङ्गात् । नान्त्यः, एतत्-पद्यकर्तुरेव प्रयोगेण दैवतादिष्वपि पुंस्त्वादौ प्रयुक्तत्वप्रसङ्गात् । मैवम्, अलङ्कारव्याकरणाद्युक्तप्रयोगनिषेधस्य तन्त्रत्वात् । तत्तन्त्रानुसन्धानेन तस्य सुज्ञत्वात् । दैवतादीनां पुंस्त्वादेरलङ्कारेष्वप्रयोगः । अत एव लडहादीनां देशीयानां संस्कृतकाव्यनिवेशेऽप्रयुक्तत्वमेव । तदुक्तं रुद्रटेन प्रकृतिप्रत्ययमूला व्युत्पत्तिर्नास्ति यस्य देश्यस्य । तन्मडहादि कथञ्चिद् रूढिरिति संस्कृते रचयेत् ।। ( का० अ०, अ० ६, श्लो० २७ ) तेन तत्र तन्निषेधे कवेरव्युत्पत्ति-प्रकाशः । घृधातोर्घृतघर्मघृणाभ्योऽन्यत्र वचधातोः पुनरन्तितसोर्लेटः प्रथमपुरुषैकवचने, जिधातोः अदधातोश्च भाषायामन्यत्र प्रयोगो व्याकरणे निषिद्धः । एवमन्यत्रापि । शब्दसंस्कारानुगुणधर्मविशेषप्रकृतिविभक्तिगम्य-त्वेनोभयदोषत्वम् ।

उपसंधानं विनाऽनुशिष्टार्थाबोधकत्वमसामर्थ्यम् ।

अत्र हन्तीत्यादि । हन हिंसागत्योरिति गमनार्थे पठितोऽपि हन्तिस्तत्-प्रत्यायने स्वरूपायोग्यः । प्रहतोद्धतपद्धतिजघनजङ्घादिषु उपसंदानेन गतेः प्रत्यायनाद् न तत्पाठवैफल्यम् । एवमध्ययनपठितस्यापीङ्धातोरधिं विना तत्र प्रयोगे असामर्थ्यमेव । प्रकृताननुगुणहिंसादिप्रत्ययोत्पत्तिर्बीजम् ।

निहतार्थं यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम् । यथा—

यावकरसार्द्रपादप्रहारशोणितकचेन　　दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥२४९॥

अत्र शोणितपदस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते ।

अनुचितार्थं यथा—

तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशुगतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥
२५०॥ (व्य० वि० २०३ पृ०)

---

न च हन्तेरेव तदर्थाप्रत्यायनात् पदैकदेशदोषता, प्रकृतिगतत्वेन पददोषत्वस्य प्राक् प्रतिपादितत्वात् ।

उभयार्थमित्यादि । प्रसिद्धार्थप्रतीतिव्यवधानेनाप्रसिद्धार्थस्य शक्त्या बोधकं निहतार्थम् । सामग्रीसाद्गुण्येन प्राक्प्रसिद्धार्थस्य प्रतिपत्तौ न पददोष इति प्रसिद्धेत्याद्युक्तिः । शक्तिविशेषणेन वा प्रसिद्धशक्यव्यञ्जके नानार्थे नातिप्रसङ्गः । प्रसिद्धश्च भूरिप्रयोगादिपटुतरसंस्कारविषयः, तेन तस्य लघूपस्थित्या तदितरतिरोधानम्, तेन पुरुषादिप्रयुक्तेषु मण्डपादिषु दोषोऽयं निष्प्रत्यूहः । कुमुदादिप्रयुक्ते पङ्कजादौ लाक्षणिकप्रयोजनाभावे नेयार्थता । अन्यथा त्वदोष एव, शक्तिविशेषेण पर्युदस्तत्वात् । लक्षणाभावपक्षे तु व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमेन प्राक् पद्मस्य ततः कुमुदस्य प्रत्यायनमिति व्यवधानमावश्यकम् ।

यावकेत्यादि । यावकरसे रुधिरभ्रमान्मुग्धता । सहसा तत्क्षणम्, विलम्बेन नायिकाभ्रमोच्छेदसंभावनात् । शोणितशब्दस्य रुधिरार्थे भूरि प्रयोगः । औज्ज्वल्ये च विरलं व्यवधीयते, स्वप्रतीतिकाले तिरोधीयते । कचरुधिरसामानाधिकरण्यानुपपत्तिप्रतिसन्धानं प्रकृतरसाननुगुणमिति तदुत्पादनं बीजम् ।

उपश्लोक्यमानतिरस्कारव्यञ्जकार्थत्वमनुचितत्वम् ।

तपस्विभिरिति । नित्ययोगे मतुप् । सत्रिभिर्याज्ञिकैः । कातरताम् अग्निषोमीयपशुमारणकालावगतामिति बहवस्तन्न, तदाऽध्वरपदसाचिव्येनैव ।

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् ।

निरर्थकं पादपूरणमात्रप्रयोजनं चादिपदम् । यथा--

उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।
अभिवाञ्छितं प्रसिद्ध्यतु भगवति युष्मत्प्रसादेन ॥२५१॥
( ना० आ० १।१३ )

अत्र 'हि' शब्दः ।

अवाचकं यथा--

---

तदवगतौ वाक्यदोषतापातात् । वस्तुतस्तु 'पशु'पदादेव प्रकृष्टकार्याक्षमत्वावगमः । प्रकृते सैव कातरता । कातर्यप्रत्यायनमननुगुणम् ।

निरर्थकमिति । वृत्तन्यूनतापरिहारः पूरणम् । 'कला च सा कान्तिमती' इत्यादौ चकारेण समुच्चयस्यापि प्रतीतिरिति मात्रपदेन तद्वारणम् । एवं वाक्यालङ्कारप्रयोजनान्तराणां यावदादीनामपि व्युदासः । स्तोत्रवाक्येऽप्येवमसम्भवं वारयति चादिपदमित्यादिना, पूरणे चादीनामनुशासनात् ।

उत्फुल्लेत्यादि । केसरलग्नः परागः, तद्वद् गौरा द्युतिर्यस्याः । तेन गौरवसहचरितसौरभ्यालाभात् पद्मिनीत्वावगमः । युष्मदिति गौरवाय बहुवचनम् । तेनैकत्वेन सम्बोधने नासङ्गतिः, हेरवधारणाद्यर्थाविवक्षया पूरणमात्राय प्रयुक्तत्वात् । न चाधिकपदता, चादीनां छन्दःपूरणायापि पाठेन निष्प्रयोजनत्वाभावात्, तत्त्वेनैवाधिकपदत्वात् ।

ननु कथं हेः पदत्वं स्वतोऽर्थाप्रत्यायनात् । नास्त्येवेति चेत्, न, पददोषत्वानुपपत्तेः । नैवं ममपदस्यैव दुष्टत्वादजहत्स्वार्थलक्षणया अवधारणादेरपि प्रत्यायनात् । हिकारादेः परं तत्तात्पर्यग्राहकत्वात् । अत एव दोषस्य तन्मूलतया तद्गतत्वेन व्यवहारः । अवधारणादेरननुगुणस्य प्रत्यायकं दूषकताबीजम् ।

अवाचकमित्यादि । सङ्केतविरहादबोधकमवाचकम् ।

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषादरः ॥२५२॥
( कि० अ० २।३३ )

---

"असमर्थे नासङ्केतं लाक्षणिके च नाबोधकत्वमिति न तत्र प्रसङ्गः" इति मिश्राः, तन्न; सङ्केताभावस्याबोधप्रयोजकत्वाभावात्, स्वरूपसतः सङ्केतस्य बोधप्रयोजकत्व एव तदभावस्याबोधप्रयोजकत्वसम्भवात् । ज्ञानलक्षणायां तु सङ्केताग्रहदशायामप्रतीतौ घटादौ घटादिपदानामप्यवाचकत्वप्रसङ्गात् । यत्रार्थे यस्य सङ्केतबोधकत्वयोरभावस्तत्र तदेव तदवाचकमिति विवक्षायां तु लक्ष्यार्थतात्पर्यग्रहे तद्विषयकसङ्केतग्राहकत्वयोरभावेन लाक्षणिकेऽप्यति-प्रसङ्गात् । बोधस्वरूपयोग्यत्वे तु जन्तुपदादावप्यदोषत्वप्रसङ्गात्, प्रयोजन-विवक्षया लक्षणाया बोधकत्वप्रसङ्गात् । तात्पर्यानुपपत्त्या लक्षणाया वारयितुमशक्यत्वात् । वस्तुतस्तु वृत्त्यनवच्छेदकप्रकारकप्रतीतितात्पर्यकत्वं तत्त्वम्, लाक्षणिकं लक्ष्यताऽवच्छेदकप्रकारकप्रतीतितात्पर्यकमेव । 'जन्तु'-प्रभृतावदातृत्वादिकं शक्तौ नावच्छेदकम् लक्षणाभावस्तु प्रपञ्चयिष्यते । लक्षणाभावपक्षे कुमुदादिप्रयुक्ते पङ्कजादिपदे योगार्थस्य शक्त्यवच्छेदकत्वमेव । 'विदधत्'इत्यत्र विपूर्वदधातेः कृतावेव शक्तिर्न धारणे, तथा प्रतीत्यभावात् । तेन विवक्षितसाधारणस्य वृत्त्यनवच्छेदकत्वम् । धातुगणपठितार्थभ्रमाच्च प्रयोगः । अत एव शक्तिभ्रान्त्या घटादिप्रयुक्ते पटादौ पदेऽप्यवाचकत्वमक्षतम् ।

ननु 'जन्तु'प्रभृतावपि कदाचित् प्रयोजनविवक्षया लक्षणायामदातृत्वा-देरपि लक्ष्यताऽवच्छेदकत्वसम्भवे लक्षणमिदमसम्भवीतीति चेन्न, विशिष्य-विवक्षितत्वात् । यस्य पदस्य यदा यो धर्मो वृत्त्यनवच्छेदकः, तदा तत्प्रकारकप्रतीतितात्पर्यकं तत्पदं तमर्थं प्रत्यवाचकमित्यर्थात् ।

अवन्ध्येत्यादि । अमर्षशून्येन विद्विषा जातहार्देन जन्तुना अदात्रा जनस्य न दरो भयम्, न वा आदरः । अमर्षशून्येनेत्यवन्ध्यकोपस्य जन्तुनेत्यापद्विहन्तुर्व्यतिरेकौ ।

अत्र जन्तुपदमदातर्यर्थे विवक्षितम्, तत्र च नाभिधायकम्।

यथा वा—

हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
तद्विच्छेदरुजाऽन्धकारितमिदं दग्धं दिनं कल्पितम्।
किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत् कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥२५३॥
( वि० उ० )

अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकम्।

यच्चोपसर्गसंसर्गादर्थान्तरगतम्।

---

अत्र जन्तुपदमिति—अत्रादातरि विवक्षितम्, अदातृत्वप्रकारकप्रतीति-तात्पर्यकम्। अन्यथाऽऽपद्विविहृतिव्यतिरेको न स्यात्। नाभिदायकमिति। विवक्षितार्थाप्रत्यायनेन[१] बीजोद्घाटनम्।

न च तात्पर्यानुपपत्त्या लक्षणायामदातृत्वस्य न वृत्त्यवच्छेदकतेति वाच्यम्, सामान्यशब्दानामेकविशेष्यबाधेनापरविशेष्यप्रकारकत्वनैयत्येन दातुरदातुश्च जन्तोर्दातृत्वबाधेनादातृत्वप्रकारेणान्वयबोधनयोग्यत्वेन लक्षणाया अप्रसङ्गादन्यलभ्यत्वेन पदस्य वृत्त्यनङ्गीकारादिति।

कालगर्भस्य लक्षणस्य विशिष्य लक्ष्यमाह—यथा वेति। सा स्मर्यमाणा रात्रिस्तामसी तमसा सर्वाच्छादिका। शशिमुखीति। प्रकाशोपयोगित्व-कथनम्। इदमनुभूयमानं प्रकाशमयम्। जीवलोकः प्राणस्थितिरूमयः। प्रकाशमयमितीति। तत्त्वेनैव तमिस्रातो व्यतिरेकः। न च दिनत्वमेव तत्त्वम्, व्यवच्छिन्नकालत्वस्यैव दिनत्वत्वात्। एतेनाविनाभावेन प्रकाशोपस्थिति-रित्यपि निरस्तम्, दिनत्वप्रकाशयोर्व्याप्तिविरहात्। अप्रकाशमयत्वस्य बाधेन प्रकाशमयत्वस्य प्रकारत्वम्।

यच्चेति। अर्थान्तरगतं समुदाये कृतौ शक्त्यन्तरोपगमात्। न च तदपेक्षया धातुकार्यं गणपरिपठितस्यैव धातुत्वात्। अत एव संग्राम युद्ध इति गणपठिते समुदाये धातुकार्यम्।

---

१. प्रत्यायकत्वेन इति च० पु० पाठः।

यथा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥२५४॥
( व्य० वि० ३८५ )

अत्र दधदित्यर्थे विदधदिति ।

त्रिधेति व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात् । यथा—

साधनं सुमहद् यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥ २५५ ॥

---

दधदित्यर्थ इति । करोत्यर्थे समुदायशक्तिस्वीकारः । एतेन निरुपसर्गस्य धातोर्धारणत्वस्य शक्यतावच्छेदकत्वेऽपि विध्यप्रयोजकत्वकाले न तथेति कालगर्भोपयोगः ।

ननु तर्हि धारणे लक्षणा स्यादिति चेत्, न, तत्रावयवशक्तौ लक्षणाऽनवकाशात्, शक्यतावच्छेदकस्य लक्ष्यतानवच्छेदकत्वात् । प्रतिष्ठत इत्यादाविव रूढ्या परप्रतिबन्धेन योगस्याबोधकत्वात् । पङ्कजादौ न प्रतिबन्धः, पद्मे द्वयोः समावेशात् । एवं 'मण्डप'पदोऽपि मण्डपं भोजयेत्यत्र मण्डपानकर्तुरपि बोधनात् । न चैवं धारणत्वस्य शक्त्यवच्छेदकत्वेनावाचकत्वं न स्यात् । मैवम्, ययाऽऽनुपूर्व्या यद्धर्मप्रकारेण वृत्त्या बोधयितुं न शक्यते, तत्प्रकारकप्रतिपत्तितात्पर्यकत्वस्य विवक्षितत्वात् । प्रकृते त्ववयवशक्तेरुद्बोधकस्य[१] दर्शितत्वात् । न चासमर्थेऽतिव्याप्तिः, उपसंदानेन हन्तेर्बोधकत्वात् । बिजं तु अप्रकृतप्रतीत्युपार्जनम्[२] ।

त्रिधेति । त्रिप्रकारत्वं न वस्तुत्रित्वम् । सभ्यवशीकरणसम्पत्तिः श्रीः, तां लाति गृह्णाति 'र'श्रुतेः 'ल'श्रुतिः । न श्लीलमश्लीलम् । व्यञ्जकत्वादिति । साधनादिशब्दानां व्रीडाऽनुभावश्रोतृमुखनमनविच्छायताद्युत्थापनतया तद्व्यञ्जकत्वं स्फुटमेव, 'ब्राह्मण पुत्रस्ते जातः' इत्यादौ मुखप्रसादादिना हर्षादिव्यञ्जकत्वमिव । एतेन कारणलक्षणया व्रीडादिशब्दैस्तद्धेतुत्व-

---

१. प्रकृते अवयवशक्ते रबोधकत्वस्य दर्शितत्वात् ।
२. रुपसन्धानेन......अप्रकृतकृतिप्रतीत्यु दे० ना०,

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधारः
कश्चित् केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाऽथ वाऽऽनतिमृते तेनानिशं चुम्बिता ॥
२५६॥ ( अ० श० )

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हः ॥ २५७ ॥
( वि० उ० ४।२२ )

एषु साधनवायुविनाशशब्दा व्रीडाऽऽदिव्यञ्जकाः ।

सन्दिग्धं यथा—

---

कथनम्, व्रीडादिव्यञ्जकत्वासंभवात् । व्यञ्जकत्वस्य च बोधकत्वमर्थः । अन्यथा "पर्दते हदते स्तन्यं धयत्येष स्तनन्धयः । जृम्भते मुहुरासीना प्राप्तगर्भा पुनर्वधूः" इत्यत्राव्याप्तेः । 'पर्दते' इत्यादीनां जुगुप्साहेत्वभिधानेनाव्यञ्जकत्वादित्यपास्तम्, यथाश्रुतेनैवोपपादितत्वात् ।

लीलेत्यादि । अन्यस्य वनिता, न त्वन्या वनिता तदैव; क्रोधातिशयाद् मुग्धा सुन्दरी । भ्रान्त्या धूर्ततया वा वायुं ददती स्थितेत्यर्थः ।

मृदुपवन इत्यादि । अस्य बर्हिणः । कं हरेत्, अपि तु नैव, अर्थाद् माम् । केचित्तु काक्वा न कमपीत्यर्थमाहुस्तन्न, रतिसमये अन्यदर्शनासम्भवात् । वस्तुतस्तु सावहेलकाक्वा वक्तुरेव बोधनात् । चन्द्रकसाम्येन[1] कुसुमसनाथतोक्तिः ।

एष्वित्यादि । व्यञ्जकत्वं व्याख्यानमेव । वराङ्गापानवायुमरणज्ञानेन प्रकृताननुगुणस्य व्रीडादेरुत्पादनम् ।

तात्पर्यसन्देहास्पदीभूतमर्थद्वयोपस्थापकं सन्दिग्धम् । यत्तु अनिश्चितानुपूर्वीकत्वमिति लक्षणम्, तदसत्, वाक्यदोषे 'सुरालयोल्लास'इत्यादौ मार्गभूतिपदयोरानुपूर्वीनिश्चयेनापि सन्दिग्धत्वेन तदव्याप्तेः ।

---

१. चन्द्रकसाकल्येनेति च० पु० पाठः ।

आलिङ्गितस्तत्रभवान् सम्पराये जयश्रिया ।

आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥२५८॥

अत्र वन्द्यां किं हठहृतमहिलायां किं वा नमस्यामीति सन्देहः ।

अप्रतीतं यत् केवले शास्त्रे प्रसिद्धम् । यथा—

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत् कर्म बन्धनम् ॥२५९॥

अत्राशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः ।

ग्राम्यं यत् केवले लोके स्थितम् । यथा—

---

आलिङ्गित इत्यादि । सम्पराये युद्धे । वन्दी वन्द्या वेत्यनिश्चयादर्थानिश्चयः ।

न चानुपूर्वीनिश्चयाभावात् कथमर्थद्वयोपस्थितिरिति वाच्यम्, लाघवेनानुपूर्वीज्ञानस्यैव तन्त्रत्वात् । तत्संशयेऽप्युपत्तेः । श्वेतो धावतीत्यादौ तथैवोपगमात् ।

अथ श्लेषेणार्थद्वयस्य विशेषणत्वेन विषयत्वेन वाऽन्वय इति चेन्न, अर्थद्वयस्य वैरूप्येण एकान्वयबोधने श्लिष्टपदस्य स्वरूपायोग्यत्वात् ।

प्रति प्रतिशास्त्रे इतं ज्ञातं प्रतीतम्, न प्रतीतमप्रतितम् । यत् किञ्चिच्छास्त्रे परिभाषितमित्यर्थः ।

सम्यग्ज्ञानं तत्त्वज्ञानम्, वासनायां प्रयुक्तस्याशयशब्दस्य योगशास्त्रपरिभाषितस्य विरलप्रयोगेण झटिति न संस्कारोद्बोधकता, किन्तु भावनयैवेति भावना विलम्बः । एतेन 'सामाजिकानां सर्वविज्ञतयाऽर्थप्रतीतौ दोषोऽयं न लब्धपद' इति निरस्तम् ।

ग्रामे भवो ग्राम्योऽविदग्धः, न तु सभ्यस्तत्प्रयुक्तः ।

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ।।२६०।।

अत्र कटिरिति ।

नेयार्थम् 'काश्चिन्नैव त्वशक्तितः' (त० वा० ७०० पृ०) इति यन्निषिद्धं लाक्षणिकम् । यथा—

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि चपेटापातनातिथिम् ।।२६१।।

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ।

---

राकेत्यादि । अखण्डपूर्णिमा राका । तपनीयं काञ्चनम् । कटिरिति । श्रोणीनितम्बादिकमौप[मेव] नागरिकम्, कटिपदं त्वविदग्धमात्रप्रयोज्यम् । वक्तुरविदग्धताऽनुसन्धानमननुगुणं याभमैथुनसुरतादिनां[१] समानार्थत्वेऽपि प्रथमयोरिव नितम्बादिपर्यायेऽपि कटिपदे अश्लीलत्वसम्भवेऽपि उपाधेरसङ्कराद् दोषपार्थक्यम् ।

नेयो न्यायपरिहारेण कवेः स्वेच्छया कल्पनीयोऽर्थो यस्य । रूढिप्रयोजनं विना शक्यसम्बन्धमात्रेणाशक्यार्थेऽपि स्थापनमिति यावत् ।

शरत्कालेति । कपोले करतालाघातश्चपेटः ।

अत्रेति । निर्जितत्वे न लक्ष्येण किञ्चित् प्रयोजनम्, रूढ्यभावः स्फुट एव । न च निर्जयातिशयः फलमुत्तमं प्रत्यधमेन, तत्र कृते तदभावात्, प्रत्युताधमस्यैव तिरस्कारप्रवृत्तेः । रूढिप्रयोजनान्यतरघटितलक्षणास्वरूपप्रच्यवाच्च न्यायोल्लङ्घनम् ।

न च लक्षणाऽभावात् कथं पदार्थोपस्थितिः, सम्बन्धमात्रेणैव तदुपपत्तेः ? तत्र सम्बन्धे परं वृत्तित्वविरहः । गुरुमते वृत्त्यनुपस्थापितस्यापि शब्दान्वयप्रवेशः । अत्र कवेरव्युत्पत्तिप्रतिसन्धानमननुगुणम् ।

नन्वेवम् 'चपेटापातनातिथिम्' इत्यत्र लक्षणाऽभावे 'यन्निषिद्धंलाक्षणिकम्' इति मूलविरोध इति चेत्, न, लाक्षणिकपदं तु शक्यसम्बन्धमात्रबोधकपरम्, न तु लक्षणया बोधकपरम् । जघनत्वेन लक्षणया जघनबोधके 'काञ्चीगुणस्थान'पदे न दोषः । ग्राम्यस्य 'जघन'पदस्य परीहारेण प्रयुक्तस्यैतत्पदस्य कान्तिपोषकत्वात् । न चास्य यौगिकत्वम्, काञ्चीगुणासम्बन्धेऽपि तत्प्रयोगात्, नितम्बेऽपि प्रयोगप्रसङ्गात्, तस्यापि तदधिकरणत्वात्, वस्तुतो जघनत्वेनैव प्रतीतेश्च ।

---

१. मैथुनरतसुरता·········दे० ना० गौ० पा० ।

अथ समासगतमेव दुष्टमिति सम्बन्धः, अन्यत् तु केवलं समासगतश्च ।

क्लिष्टं यतोऽर्थप्रतिपत्तिर्व्यवहिता । यथा—

अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ।।२६२।।

अत्रात्रिलोचनसम्भूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः

अथ समासगतमेव दुष्टमिति सम्बन्ध इति । एवकारस्यायोगव्यवच्छेदोऽर्थः । तत् त्रयं समासगतत्वायोगव्यच्छेदेन दुष्टमित्यर्थः । एवकारानुपादानेऽनुपस्थितानां बहूनां त्रितयस्य समासगतत्वसम्बन्धेऽन्येषां तद्व्यावृत्तिः स्यात् । तदुपादाने तु समासगतत्वायोगव्यवच्छेदः सम्बन्धस्त्रितयस्य, नान्येषामिति तेष्वनियम इत्याह—अन्यत् त्विति ।

क्लेशेन कारणविलम्बकृतविलम्बेनार्थप्रत्यायकं क्लिष्टम् । कारणमाकाङ्क्षाज्ञानादिकम् । तत्राकाङ्क्षाविलम्बाद् विलम्बः । यथा 'प्रतिष्ठितराजपुरुष' इत्यत्र राजपदान्वितं प्रतिष्ठितपदं राजसाकाङ्क्षं पुरुषसाकाङ्क्षं वेति सन्देहाद् झटिति नान्वयबोधः ।

आसत्तिविलम्बाद्यथोदाहरिष्यमाणे धम्मिल्लेत्यादौ (२८६ श्लो०)। तात्पर्यविलम्बादाह—अत्रिलोचनेत्यादि । अत्र कुमुदे तात्पर्यम्, तस्य विलम्बेनावगमः । तथाहि यशःसदृशे शुक्ले तात्पर्यग्रहः, शुक्लान्तरभासनस्य तेजोऽन्तरेणापि साध्यतया चन्द्रोदयविशिष्टोपादाने तदेकसाध्यभासने कुमुदेऽस्य तात्पर्यमिति परामर्शाद् विलम्बः । न च विशेषणमर्यादया विशेष्यलाभे कथं विलम्बः. चन्द्रोदयसाध्यप्रदीप्तिमत्त्वस्यातिप्रसक्तत्वेन परामर्शान्तरसापेक्षतयैव कुमुदबोधकत्वात् । यत्र विशेषणं नातिप्रसक्तम्, तत्र विशेष्यबोधेऽपि न विलम्बः । यथा 'शतार्धपञ्चांशभुजो द्वादशार्धार्धलोचनः' इत्यत्र दशभुजत्वं त्रिलोचनत्वं च महादेवैकनियतत्वेन झटिति तदबोधकम् । इयमेव पदार्थे वाक्यरचना । 'प्रमेयशुक्ल' इत्यत्र प्रमेयत्वप्रकारकशुक्लत्वतात्पर्यकप्रमेयपदे तात्पर्यग्राहकविलम्बेन वाक्यदोषतैव, तात्पर्यज्ञानस्य वाक्यार्थज्ञानोपकरणत्वात् । 'अत्रिलोचन' इत्यादौ समस्तत्वेऽपि पदस्यैव वाक्यत्वात् । वस्तुतस्तु

१. प्रमेयं यशः इत्यत्र इति च० पु० पाठः ।

अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत् ।

यथा—

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः ॥ २६३

( हनु० ना० )

अत्र मिथ्यामहिमत्वं नानुवाद्यम्, अपि तु विधेयम् ।

---

विलम्बेनापि तात्पर्यग्रहे तत्राभवन्मतयोगतैवेति तत्र वैशिष्ट्यमवच्छेदकमिति वैशिष्ट्यप्रतियोगिनां सर्वेषामेव विशेषणत्वेन तुल्यतया न कस्यापि विधेयत्वानुवाद्यत्वप्रतिपत्तिः ।

विधेयांशप्राधान्याप्रतिपादकमविमृष्टविधेयांशम् ।

मूर्ध्नामित्यादि । उद्वृत्तसंक्रमेण कृत्तानि, तथापि सर्वेषां मूर्ध्नां पातनालाभः ।

अत्र बहुव्रीहावजहत्स्वार्थलक्षणया शक्त्या वाऽन्यपदार्थप्रतिपत्तिरित्याह—मिथ्यामहिमत्वमित्यादि । मिथ्याऽयथार्थोऽकीर्तिपर्यवसायी महिमा येषां तस्य भावस्तत्त्वम् ।

समासोत्तर‘त्व’प्रत्ययस्य सम्बन्धाभिधायकत्वेन मूर्ध्नामयथार्थमहिमसम्बन्धस्यापूर्वत्वेन विधेयतया विवक्षितस्य समासे गुणाभावान्न तथा प्रतिपत्तिः । तदाह—नानुवाद्यम्, अपि तु विधेयमिति । ‘घटः सुन्दरः’ इत्यत्र विशेषणत्वेनाप्राधान्यस्य विधेयत्वेन च प्राधान्यस्यावच्छेदकभेदकभेदेन वृत्तेर्न विरोधः । महिम्नो मिथ्यात्वमित्यर्थस्तु मिथ्यामहिमत्वपदानभिधेयत्वेनोपेक्षितः, यदप्रतिष्ठितैरुक्तम्—‘प्राधान्यं विभक्तिगम्यमेव’, समासे तु विभक्तिलोपान्न तत्प्रतीतिः । यत्र तु समासेऽपि तस्याः स्थितिः, तत्र तत् प्रतीयत एव । यथा ‘दास्याः कामुकः’ इत्यत्रेति, तदसत्, विभक्तिलोपेऽपि समासे विभक्त्यर्थानामपृथक् प्रतीतेः । अनुवाद्यविधेयभावस्य च खण्डप्रतीतिसाध्यत्वात् । तदुक्तम् ‘ऐकार्थ्यं पृथगर्थानाम्’ इति ।

यथा च–

स्रस्तां नितम्बादवलम्बमाना
पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण
द्वितीयमौर्वीमिव कार्मुकस्य ॥२६४॥
( कु० स० ३।५५ )

अत्र 'मौर्वीं द्वितीयाम्' इति द्वितीयत्वमात्रमुत्प्रेक्ष्यम् ।

यथा च–

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥२६५॥
( कु०स० ५।२२ )

---

समासान्तरे उदाहरति–स्रस्तामिति । स्थानविदा आधारसाद्गुण्याद् गुणप्रकर्षविज्ञानात् स्मरेण महतेऽप्यनयैव वशीकरिष्यत इति चिन्तावता ।

अत्रेति । मात्रपदेन विशिष्टोत्प्रेक्षानिरसनम् । स्वीयवस्तुन एव न्यासीकरणम्, न तत्सदृशस्येति नोपमा, तदाह—उत्प्रेक्ष्यमिति ।

ननु विशिष्टोत्प्रेक्षैवेयमिति । अत्र केचित्—वकुलमालाया मौर्व्याकारेण तत्त्वप्राप्तौ द्वितीयत्वस्यैव तत्त्वमित्याहुः, तन्न ; तदा द्वितीयत्वस्यापि प्राप्तत्वात्, उत्प्रेक्षाया असम्भवात् । वस्तुतस्तु कार्मुकपदसान्निध्येन मौर्व्या आरूढत्वावगतिः, ततश्च धनुरारूढमौर्व्या अवशवशीकरणरूप-कार्यकारित्वादन्यत्वेनोत्प्रेक्षते । द्वितीयामन्याम् । यथा 'अयं राजा अपरः पाकशासन इव' इत्यादौ । यथा च प्रतिनिधौ महापात्रे राजकर्मसम्पादके जनः सम्भावयति—किं सिंहासनारूढो राजा द्वितीयो भूत्वा कर्म कुरुते इति ।

वपुरित्यादि । विरूपाक्षत्वेनालक्ष्यजन्मत्वेन दिगम्बरत्वेन च रूपकुल-धनाभाववेदनम् । बालमृगाक्षि सदसत्सु [1]तुल्यदर्शने । व्यस्तमेकैकम् ।

---

१. मृगशिशुतुल्येत्यादि च० पु० पाठः ।

अत्र 'अलक्षिता जनिः' इति वाच्यम् ।

यथा च—

आनन्दसिन्धुरतिचापलशालिचित्त-
सन्दाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्ता
तान्ति तनोति तव सम्प्रति धिग् धिगस्मान् ॥२६६॥

अत्र 'न मुक्ता' इति निषेधो विधेयः ।

---

अत्र जन्मनोऽलक्ष्यत्वं विधेयम् । [1]तच्च बहुव्रीहौ गुणीभूतम् । तदाह—अलक्षिता जनिरित्यादि । पददोषोद्धारमात्राभिप्रायेण पाठकल्पनम् । अलक्षितेत्यस्य प्रागुपादाने वाक्यगतविधेयाविमर्शतादवस्थ्यात् । वस्तुतस्तु अलक्षितजन्मनो विशिष्टस्य विधेयतायामलक्षितेत्यस्य विशेषणस्य पूर्वोपादानमुचितमिति रचितपाठः समीचीनः ।

न च जन्मनोऽनुवादेन लक्षणाभावोऽलक्षणं विधेयम्[2] । त्रिलोचने जन्मनोऽसिद्धस्य साध्यताया विधेयकोटिप्रविष्टस्यानुवादानुपपत्तेः, सिद्धस्यैवानुवाद्यत्वात् । विशिष्टजन्मनस्त्वारोपेणैव त्रिलोचने सम्भवात् । विधेये आरोप्यमाणताया अनुगुणत्वात् । 'मुखं चन्द्रः' इत्यत्र मुखे चन्द्राभेदस्येव । न च जन्मारोप्य तत्र लक्षणाभावविधिः, आरोप्यत्वस्य विधेयत्वगमकत्वात् । 'तल्'प्रत्ययार्थगुणीभूतबहुव्रीह्यर्थे गुणीभावाभिप्रायेण लक्ष्यभेदः ।

यत्तु समासपदस्य वृत्त्युपलक्षणेन तद्धितार्थे गुणीभावदर्शनायेदमुदाहरणमिति मिश्रमतम्, तन्न; उक्तरीत्योपपत्तौ लक्षणाङ्गीकृतेर्दुर्बलत्वात् ।

नञ्समासे उदाहरति—आनन्देति । सन्दाननं निगडनम् । उदन्तो वार्ता, तान्ति तनुताम् । निषेधो विधेय इति । क्रियासम्बन्धेनैव नञोऽभावप्रतिपादकत्वेन तया सह तस्यैकाधिकरणकत्वविरहान्न समासः । ततश्च मुक्ता न भवतीत्यर्थो विवक्षितः ।

---

१. तद्गुणसंविज्ञानबहुव्रीहौ……गौ० पाठः ।

२. जन्मनोऽलक्षणं वा………गौ० पाठः ।

यथा--

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥२६७॥
(वि० उ० ४।७)

इत्यत्र न। त्वमुक्तताऽनुवादेनान्यदत्र किञ्चिद् विहितम् ।

यथा--

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥ २६८ ॥
(र० वं० २।२२)

---

तदुक्तम्—

अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ इति ।

अब्राह्मण इत्यादावुत्तरपदसम्बन्धिनो नञः समासे ब्राह्मणप्रतियोगिकान्योन्याभाववत्प्रतिपत्तादभावस्य विशेषणत्वेन विधेयत्वाप्रतिपत्तिः ।

तदुक्तम्—

प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ इति ।

निषेधप्राधान्ये समासाभावं दृष्टान्तयति—यथेति । सन्नद्धः कवची । दृप्तनिशाचरो न भवतीति गम्यमानभवतिक्रियान्वयिनो नञो न समासः । एवमुत्तरेष्वपि ।

ननु अमुक्तत्वमत्रानुवाद्यमत्रस्तत्वादिवदित्याह – न चेति । तत्राह—गोपनादिवदत्र विधेयान्तराभावाद् विधेयत्वमेवेति भावः । क्वचित्तु समासेऽप्यभावस्य प्राधान्यावभासः । यथा 'अलवणभोजी, अश्राद्धभोजी' इत्यादौ । अनयोरश्राद्धालवणपदोपपदाद् भुजेर्व्रताभीक्ष्ण्ययोश्चेति विहितेन णिनिना श्राद्धं लवणञ्च न भुक्तमिति श्राद्धलवणभोजनाभावव्रताभिधानात् ।

इत्यत्रात्रस्तताऽनुवादेनात्मनो गोपनादि ।

विरुद्धमतिकृद् यथा—

सुधाकरकराकारविशारदविचेष्टितः ।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ।।२६२।।

अत्र कार्यं विना मित्रमिति विवक्षितम्, अकार्येषु मित्रमिति तु प्रतीतिः ।

---

न च श्राद्धलवणोपपदभुज्युत्तरविहितेन णिनिना व्रताभिधानम्, येन श्राद्धभोजिलवणभोजिपदाभ्यां नञः समासः । श्राद्धलवणेतरभोजनस्य रागपरिप्राप्ततया तद्व्रतस्य तद्भोजननिषेधे पर्यवसानमित्यभावप्राधान्यं शाकाहारादिव्रत इवेति । एवमसूर्यम्पश्या राजदारा इत्यत्र राजदाराणामेवं गोपनं यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्तीत्यभावप्राधान्यभानम् । सूर्येतरदर्शित्वे च गोपनं न स्यात् । गोपन एव महाकविप्रयोगदर्शनात्[१] । अत एव दृशिना सह सम्बद्धस्य नञः सूर्येण सह समासो गमकत्वादित्युक्तम् । गमकत्वाद् दृशिसम्बन्धेनैव नञो गोपनस्य बोधकत्वादित्यर्थः । अभिधानादत्र समासः । गोपनातिशयप्रतीतिरिति तत्त्वम् ।

प्रकृतार्थधीप्रतिबन्धकीभूताप्रकृतार्थधीजनकं विरुद्धमतिकृत् । तेन विरुद्धस्य मतिः, विरुद्धा मतिरिति सामासे नास्था । अनुचितार्थाश्लीलयोरर्थानां परस्पराप्रतिबन्ध्यप्रतिबन्धकता । अमतपरार्थे तु द्वयोरपि प्रकृतत्वम्, निहतार्थे तु विलम्बेन प्रतीतिरिति भेदः ।

सुधाकरेत्यादि । विशारदं श्रेष्ठम् । अत्रेति । कार्यस्याभावोऽकार्यम्, तेन मित्रमकृत्रिममित्रमित्यव्ययीभावेन लक्षणानुसन्धानस्य विलम्बेन तदपेक्षया शक्तिलक्षणयोरन्यतराभावात् कर्मधारयेण झटिति कुकर्मप्रतीतिरित्याह- अकार्येषु मित्रमिति तु प्रतीतिरिति । अत्रोपश्लोकनेन विरोधिनः कुकर्ममित्रत्वप्रतीतिः । समासावयवस्य नञोऽनिन्दार्थत्वम् । तदुक्तम्—

तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता ।
अप्राशस्त्यमभावश्च नञर्थाः षड् प्रकीर्तिताः ।। इति ।

---

१. प्रयोगादिति गौ० च० पु० पाठः ।
२. विरुद्धा वा मतिरिति च० पु० पाठः ।

यथा वा—

चिरकालपरिप्राप्तलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥२७०॥

अत्र कण्ठग्रहमिति वाच्यम् । तथा—

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद् भवानीपतेः ।
तत्पुत्रस्तु मदान्धतारकवधाद् विश्वस्य दत्तोत्सवः ।
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ॥२७१॥
(म० वी० च० २।२८)

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति ।

यथा वा—

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः पायाद् वः सोऽम्बिकारमणः ॥२७२॥

---

प्रपञ्चयति—यथा वेति । गलग्रहो रोगविशेषः । तत्र च समुदायशक्तिः । आलिङ्गने च योगः । समुदायशक्तेर्बलवत्त्वेन रोगस्यैव प्रतीतिरिति विरुद्धस्य मतिः ।

न च रूढिबाधेऽवयवशक्त्या परिरम्भप्रतीतौ निहतार्थत्वं स्यादिति वाच्यम्, विलम्बेनापि गलग्रहपदात्तदप्रतीतेः, रूढ्या योगस्य प्रतिबन्धात् । शोणितादौ (१४६ श्लो०) त्वर्थद्वयस्य रूढिसाम्येऽपि भूरिप्रयोगादप्रकृतार्थस्य द्राक् प्रतीतिरिति ।

न त्रस्तमित्यादि । भवानीपतिशब्द इत्यादि । भवस्य पत्नी भवानी, तस्याः पतिरिति भवस्याप्रतीतिः । न खलु देवदत्तस्य भार्यायाः पतिरयमित्युक्ते देवदत्तः प्रतीयते, किन्तूपपतिरेवेत्याह—पत्यन्तर इत्यादि । आराध्यायाः परदेवताया एवं प्रतीतिरातङ्काधर्मदायिनीति मतिर्विरुद्धा ।

दृष्टान्तमाह—यथा वेति । गोरपीति । सिंह भक्ष्यत्वेनात्यन्तनिकृष्ट-

अत्र 'अम्बिकारमण' इति विरुद्धां धियमुत्पादयति ।

श्रुतिकटु समासगतं यथा—

सा दूरे च सुधासान्द्रतरङ्गितविलोचना ।
बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः ।।१७३।। (राः?)

एवमन्यदपि ज्ञेयम् ।

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ।।५२।।**

केचन, न पुनः सर्वे । क्रमेणोदाहरणानि—

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट
पितॄनपारीत् सममंस्त बन्धून् ।

---

स्यापि । सः प्रसिद्धमहिमा । गिरिसुतेति । गिरौ सिंहप्रचारेण विशेषोत्कृष्टत्वसूचनम् ।

अत्राम्बिकेत्यादि पार्वत्याः शक्तिरूपत्वेन जगज्जनकतयाम्बिकापदस्य मातृत्वेनैव शक्तिः । तदुक्तं नरसिंहपुराणे "शक्तित्वाल्लोकमातृत्वादम्बिकेति भविष्यति" इति । ततश्च शिवे स्वजनकस्त्रीरमणत्वप्रतीतिरिति विरुद्धा मतिः, तदाह—विरुद्धां धियमिति ।

पददोषानेव वाक्येऽतिदिशति । अपास्येति । एकान्वयबोधकानेकपदगतत्वेन हि वाक्यदोषता । व्याकरणसंस्कारस्य पद एवेति तत्प्रच्यवस्यापि तत्रैवेति च्युतसंस्कृतेर्न वाक्ये सम्भवः । एवञ्च स्वातन्त्र्येण शक्यार्थोऽनुपस्थापकानामसमर्थानां निरर्थकानामपि चादिपदानां सुतरां न वाक्यत्वमिति न तयोरपि वाक्यगामितेति तेषां पर्युदासः ।

न च "गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः" इत्यत्र च्युतसंस्कृतेर्वाक्यगामित्वम् । आङो हनः स्वाङ्गकर्मकस्यात्मनेपदविधानेन पराङ्गकर्मकेऽत्र नियमोल्लङ्घनस्य 'आजघ्ने विषमविलोचनस्य वक्षः' इत्युभयपदाश्रयणेनेति वाच्यम्, हंत्यात्मनेपदयोरेवानुशासनोल्लङ्घनात् । प्रकृतिप्रत्यययोरेव नियमोल्लेखात् प्रकारान्तरेण पराङ्गकर्मत्वात्तात्पर्यग्रहेऽपि दोषानुवृत्तेः, न पुनः सर्वं इत्यसंभवात् ।

सोध्यैष्टेत्यादि । कामक्रोधलोभमोहमदमात्सर्याणि षड्वर्गाः ।

व्यजेष्ट षड्वर्गमरंस्त नीतौ
समूलघातं न्यवधीदरींश्च ।।१७४।।
(भ० का० १।२)

स रातु वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेडमूकताऽऽद्यैश्च द्यतु दोषैरसम्मतान् ।।१७५।।

अत्र दुश्च्यवन इन्द्रः, अनेडमूको मूकवधिरः ।

सायकसहायबाहोर्मकरध्वजनियमितक्षमाऽधिपतेः ।
अब्जरुचिभास्वरस्ते भातितरामवनिप श्लोकः ।।१७६।।

अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशःपर्यायाः शराद्यर्थतया प्रसिद्धाः ।

कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो ।
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथाऽपि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह ।।१७७।।

---

नन्वाख्यातवाक्यानां परस्परनिरपेक्षत्वेन प्रत्येकश्रुतिकटुत्वेन कथं वाक्यदोषतेत्यत्र टीकाकृतः—व्यजेष्ट षड्वर्गमित्यत्रैव दोष एकान्वयबोधकः, पदयोर्द्वयोरपि सत्त्वात्; तत्प्रसङ्गेन सर्वपद्याभिधानमित्याहुः । वस्तुतस्तु चकारप्रतिपादितसमुच्चयापेक्षया एकवाक्यत्वे वाक्यगामित्वानपायात् ।

न चैवं 'यस्य मित्राणि मित्राणि' इत्यादावर्थान्तरसंक्रमितध्वनीनां पदप्रकाश्यता न स्यात्, चकारेण तत्रापि साहित्यप्रतिपादनादिति वाच्यम् चकारेण पदार्थानां परस्परसाहित्यावगतौ ध्वनीनां पदमूलकत्वाक्षतेरिति ।

अप्रयुक्तमुदाहरति--स रात्विति । रातु ददातु । द्यतु खण्डयतु । असम्मतान् वैरिणः । दुश्च्यवनपदमिन्द्रे अनेडमूकपदं मूकवधिरे पठितमपि कविभिरप्रयुक्तम् ।

निहतार्थमाह—सायकः शरः खड्गश्च । मकरध्वजः समुद्रः कामश्च । क्षमा धरणी कान्तिश्च । अब्जश्चन्द्रोऽब्जं कमलं च । श्लोको यशः पद्यश्च ।

अनुचितार्थमाह—कुविन्देति । कुं पृथिवीं विन्दत इति राजा, जातिविशेषस्तन्तुवायश्च । पटयसि पटुं पटं करोषि च । गुणग्रामो विद्यादानदयादयः सूत्रसमूहश्च । नग्नाः स्तावका विवसनाश्च । आच्छादनमावरणं वासश्च ।

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थम् ।

प्राभ्रभाड्विष्णुधामाप्यविषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥१७८॥

अत्र प्राभ्रभ्राड्-विष्णुधाम-विषमाश्व-निद्रा-पर्णशब्दाः प्रकृष्टजलद-गगन-सप्ताश्व-सङ्कोच-दलानामवाचकाः ।

भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥१७९॥

---

अत्रापि तथापीत्यनेन तन्तुवायत्वारोपात्तिरस्कारव्यक्तिः ।

न चात्र कुविन्दपदात् प्रथमं रूढ्या जातिविशेषावगमः, अनन्तरं योगार्थस्योपस्थितिरनुभवश्चेति निहतार्थमिति वाच्यम्, अत्र प्रसिद्धाप्रसिद्धयोर्द्वयोरप्यर्थयोर्विवक्षितत्वात् तत्र प्रकृतस्यैव विवक्षितत्वात् । यत्र प्रकरणवशादाशु यौगिकप्रतीतिः, यथा 'सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्र । अत्र हि वाजिपदाद्योगेन विश्वदेवप्रतीतियोगः ।

वाजिनामामिक्षया योगाद् विश्वदेवा हि वाजिनः ।
प्रकृतांस्तान् वदेच्छ्रुत्या वाजिशब्दो हि यौगिकः ॥

इत्यत्र श्रुत्या श्रवणमात्रेण वदेद् बोधयेत् । मैवम्, तदा शोणितपदे निहतार्थत्वाप्रसंगात् । प्रकरणेन यौगिकोपस्थितेः । वस्तुतस्तु 'जलदभुजगजे'-त्यादौ गरलस्यैवात्र प्रकृतस्य जातिविशेषस्य व्यङ्ग्यत्वात् ।

अवाचकमाह—प्राभ्रे ति ।

अत्र प्राभ्रविष्णुधामविषमाश्वसहस्रपर्णपदानां सजलनिर्जलमेघगगनभूतलपातालस्थानत्रयायुग्मसंख्यावच्छिन्नघोटकपत्रसहस्रवद्वाचकानां सजलमेघगगनसप्ताश्वपद्मरूपविशेषपरत्वादवाचकत्वम् ।

ननु निद्रासंकोचयोः सामान्यविशेषत्वविरहात् कथमवाचकत्वमिति चेत्, न, तत्र सामान्यविशेषनियमाभावात् । विवक्षितान्वयप्रकारीभूतधर्मस्य वृत्त्यनवच्छेदकत्व एव तत्त्वाद् निद्रापदादाक्षेपेण संकोचावगमात् । गुरुमते चानुमितस्याप्यर्थस्य शाब्दान्वयप्रवेशात् ।

क्रमेणाश्लीलत्रयमुदाहरति—भूपतेरित्यादि । उपसर्पन्ती समीप-

अत्रोपसर्पण-प्रहरण-मोहन-शब्दा व्रीडाव्यञ्जकत्वादश्लीलाः ।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्त्तनम् ॥१८०॥

अत्र वान्तोत्सर्गप्रवर्त्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां
सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये
हृदयमशेषितशोकशल्यकम् ॥ १८१ ॥

अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विराजते ॥ १८२ ॥

अत्र सुरादिशब्दाः किं देव-सेना-शर-विभूत्यर्थाः, किं मदिराऽऽद्यर्था इति सन्देहः ।

---

मागच्छन्ती रतोद्यता च । कम्पना सेना वेपथुमती च । वामं विरुद्धं भीषणं सुदरं च । प्रहरणं मारणं कामशास्त्रप्रसिद्धस्त्रीपुंसजघनद्वयताडनं च । मोहनं विपक्षसंमोहः सुरतञ्च ।

तेऽन्यैरित्यादि । प्रवर्त्तनं कृतिः पुरीषोत्सर्गश्च ।

पितृवसतिमिति । पितुर्गृहं श्मशानञ्च । पावकं शुद्धिहेतुर्वह्निश्च ।

ननु पावकशब्दस्य कथममङ्गलार्थत्वम्, वह्नेरतथात्वादिति चेत्, न; यत्रेत्यनेन श्मशानाकृष्ट्या तत्संबन्धिवह्नेश्चिताग्नित्वप्रतीतेः । यथैषां व्रीडादिव्यञ्जकत्वम्, तथा प्रतिपादितमेव पददोषप्रस्तावे ।

सन्दिग्धमाह—सुरालयेत्यादि । सुरालयो देवगृहं मदिरागृहं च । कम्पना सेना कम्पजं वेपथुश्च । मार्गणो बाणो मार्गणं याचनं च । भूतिः संपत्तिर्भस्म च ।

अत्र प्रकरणाद्यभावात् स्तुतिर्निन्दा वेति सन्देहः ।

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे ।।१८३।।

अत्राधिमात्रोपायादयः शब्दा योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः ।

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ।। १८४ ।।

अत्र गल्लादयः शब्दा ग्राम्याः ।

वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता नेत्रद्वन्द्वं बोधय साम्प्रतम् ।।१८५।।

अत्राम्बररत्नपादैः क्षततमा अचला भूः कृता, नेत्रद्वन्द्वं बोधयेति नेयार्थता ।

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ।। १८६ ।।

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे क्लिष्टत्वम् ।

---

अप्रतीतमाह—तस्याधीत्यदि । अधिमात्रोपायः प्रकृष्टसाधनसामग्रीकः । प्रकृष्ट-मृदु-मध्योपाया इति त्रिधा हि योगिनः । एवं सरभसोद्यमशालित्वं तीव्रसंवेगित्वं तीव्र-मृदु-मध्य-संवेगित्वं चेति त्रैविध्यम् । तत्राधिमात्रोपायस्य तीव्रसंवेगस्य शेषद्वयापेक्षया प्रत्यासन्नतरः समाधिलाभः । समाधिप्रयोजनं च तपोविद्याब्रह्मचर्यादिसम्पन्नः स्थिरकालनैरन्तर्यज्ञानाभ्यासः । संस्कारदार्ढ्यदायी दृढभूमिः ।

ग्राम्यमाह—ताम्बूलेत्यादि । गल्लादयो गण्डादिषु विदग्धेन न प्रयुज्यन्ते ।

नेयार्थमाह—वस्त्रेत्यादि । अत्र वस्त्रपदेनाम्बरपदं वैदूर्येण मणिः चरणेन च पादः । सत्त्वरजःपरपदेन तमःपदम् । निष्कम्पेत्यनेनाचलत्वं लक्ष्यते । रूढिप्रयोजनाभावाच्च नेयार्थता ।

क्लिष्टमाह-धम्मिल्लस्येत्यादि । अत्रासत्तिज्ञानविलम्बादन्वयबोधविलम्ब इति प्रागुक्तमेव ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसभटान् जीवत्यहो रावणः ।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥१८७॥

अत्रायमेव न्यक्कार इति वाच्यम्। उच्छूनत्वमात्रं चानुवाद्यम्, न वृथात्वविशेषितम्। अत्र तु शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषः, न वाक्यार्थस्य ।

---

विधेयाविमर्शमाह—न्यक्कार इत्यादि। अयमरिसम्बन्धः। अत्र न्यक्कारत्वं विधीयते। तत्रानूद्यविधेययोः[१] पौर्वापर्योपादानेनैव तथा प्रतिपत्तिः। तदुक्तम्—

यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यता ।
तच्छब्दयोग औत्तर्यं साध्यत्वं च विधेयता ॥ इति ।

अनूद्यविधेयभावः संसर्गो विशेष्यविशेषणभाव इवापदार्थोऽपि वाक्यार्थप्रतीतौ भासते। उच्छूनत्वमात्रं चेति। अयं तु समासगतत्वेन पददोष एव प्रसङ्गादुक्तः, न वाक्यदोषः, मिथ्यामहिमत्ववदिति टीकाकृतः[२] प्रलपन्ति, तन्न, वाक्यदोषप्रकरणे पददोषाभिधानानौचित्यात्। न चागत्या तथेति वाच्यम्, गतेः कल्पयिष्यमाणत्वात्। तथाहि वृथोच्छूनैरेभिर्भुजैः किमिति किमर्थस्य वृथात्वस्य विधेयत्वं विवक्षितम्। न च तथा प्रतीतिः। वृथात्वस्य वृथापदेनानूदितत्वात्, अनूद्यत्वप्रतीतेर्विधेयत्वप्रतीतिप्रतिबन्धकत्वात्। उच्छूनैर्भुजैः किमित्यभिधानेनैवानूद्यत्वविधेयत्वप्रतिपत्तेः। न चैवं पौनरुक्त्यमेव, उपधेयसङ्करस्यादूषकत्वात्। अथ किमित्यनेन भुजानामेव वृथात्वम्।[३] 'वृथा'पदेनोच्छूनत्वस्येति—विषयभेदात् किमर्थस्य विधेयत्वप्रतीतिरेवेति चेन्न, विशिष्टविधेर्विशेषणविशेष्योभयपर्यवसन्नत्वेनोच्छूनत्वेऽपि वृथात्वस्य

---

१. विधेयपौर्वापर्योपा' च० पु० पाठः ।
२. दीपिकाकृतः—ङ० पु० पाठः।
३. क० पु० वृथात्वमिति गलितम् ।

यथा वा—

अपाङ्गसंसर्गि तरङ्गितं दृशो-
र्भ्रुवोररालान्तविलासि वेल्लनम् ।
विसारि रोमाञ्चनकञ्चुकं तनो-
स्तनोति योऽसौ सुभगे समागतः ॥१८८॥

अत्र 'योऽसा'विति पदद्वयमनुवाद्यविधेयार्थतया विवक्षित-मनुवाद्यमात्रप्रतीतिकृत् । तथाहि—प्रकान्तप्रसिद्धानुभूतार्थ-विषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते । क्रमेणोदाहरणम्—

---

विवक्षितत्वात् । अथवा विलुण्ठनेन हेतुना भुजोच्छूनत्वमेव स्यान्न तु तद्वृथात्वमिति वृथाकिम्पदयोरेव भुजवैयर्थ्ये तात्पर्यमिति न विषयभेद-प्रसङ्गः । 'वृथोच्छूनैः किम्' इति पदद्वयावलम्बनाद्वाक्यदोषता । तदाह 'न वृथात्वविशेषितम्' इति । वृथात्वविशेषणाभावे निःप्रत्यूहं विधेयत्वप्रतीति-रित्युक्तमेवेति ग्रन्थरहस्यम् ।

यदप्युच्छूनत्वमात्रमित्यादिना प्रसङ्गेनानुवादायुक्तत्वमुपन्यस्तमिति[१] मिश्रमतम्, तदसत्; चकारादेकदोषसमन्वयसाहित्यावगमात्; प्रकृतदोष-समन्वये सम्भवति प्रसंगाभिधानानौचित्यात् ।

नन्वनूद्यविधेयभावानुपपत्तिरर्थयोरेवेति कथं वाक्यदोषतेत्याह—शब्द-रचनेत्यादि । रचनाया वाक्यधर्मत्वेन तदन्वयव्यतिरेकानुविधानाद् तद्दोष-तैवेति भावः ।

प्रपञ्चयति—यथा वेति । कञ्चुकमिति । सर्वाङ्गव्यापाराद् विसारि चिरस्थायि ।

अत्र हि यस्तरङ्गितादिकं तनोति असौ समागत इत्यनूद्य विधेयभाव-विवक्षा । न च तथा प्रतिपत्तिः । यच्छब्दसामानाधिकरण्येनोपात्ता अदसादयः प्रसिद्धिमात्रपरामर्शकाः । तदाह—अनूद्यमात्रप्रतीतिकृदिति ।

ननु यत्तदोरेकोपादानेऽपि निराकाङ्क्षप्रतीतिः स्यादेवेत्यत्रापि केवलं यत्पदात्तथाऽस्त्वित्याह—तथा हीत्यादि । यत्तदोः परस्परनैरपेक्ष्यमसार्वत्रिक-मित्याह प्रक्रान्तेत्यादि । प्रक्रान्तः पूर्वप्रतीतिविषयः ।

---

१. नानुवाद्युक्तत्वमुपन्यस्तमिति क० पु० पाठः ।

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥१८९॥
( रघु० १६।४७ )

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥
( कु० स० )

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षितासि ॥१९०॥

---

अयमर्थः—प्रसिद्धानुभूतार्थादन्यत्र सर्वत्रैव तदः प्रक्रान्तपरामर्शकत्वम् । तदपि द्विविम्—क्वचिद्विधेयतया विवक्षितस्य, क्वचित् केवलस्य । तत्राद्ये यदुपादानमावश्यम्, तेन विना तदो विधेयत्वाबोधनात्, व्युत्पत्तिमर्यादाया-स्तथात्वात् । यथा 'यदुवाच न तन्मिथ्या' इति ।

द्वितीये तूदाहरति—कातर्येति । केवला नीतिः कातर्यमित्यन्वयः । शौर्येऽपि केवलत्वसम्बन्धः, तदैव समेतत्वस्योभयव्यतिरेकप्रतीतेः ।

सोऽतिथिर्नाम नृपतिः । अत्र 'यत्' उपादानं विनाऽपि पूर्वपूर्ववर्णनया प्रकृतस्यातिथेः 'तत्' पदेन परामर्शाद् न यत्पदापेक्षा ।

द्वयमिति । सा प्रसिद्धा ।

उत्कम्पिनीति । ते मदनुभूतशोभाविशेषे । अत्र क्रूरेण मत्सरेण । मत्सर-सम्बन्धात् तदक्षमेण सूर्यवद् दाहकत्वेनैव[1] जात्या दारुणता । तल्लावण्यातिशय-दार्शन-जनितजाड्येन दाहक्रियानिष्पत्तिरेव कथमित्याह— न वीक्षितासि ।

---

१. सर्वदाहकत्वेनैव गौ० पा० ।

यच्छब्दस्तूत्तरवाक्यगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्य-गतस्य तच्छब्दस्योपादानं नापेक्षते । यथा—

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताऽधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ।।१९१।।

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः । यथा ह्यत्रैव श्लोक आद्यद्वितीयपादयोर्व्यत्यासे । द्वयोरुपादाने तु निराकाङ्क्षत्वं प्रसिद्धम् ।

अनुपादानेऽपि सामर्थ्याद् क्वचिद् द्वयमपि गम्यते ।

यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।

---

तत्र हेतुर्धर्माऽन्धितेनेति । अनयोः प्रसिद्धयनुभवैकगोचरत्वपरयोस्तदोर्विधेय-त्वाप्रतिपादनान्न यदुपादानापेक्षेति भावः ।

यच्छब्दस्त्विति । उत्तरवाक्यार्थगतत्वेन तदन्वयप्रतियोग्युपस्थापकत्वेन । वाक्यगतत्वेनेति सुगमः पाठः । तच्छब्दोपादानं नापेक्षते—अनूद्यत्वाविवक्षया बुद्धिस्थमात्रबोधकत्वात् । अनूद्यस्यैव विधेयसाकाङ्क्षत्वात् ।

पुष्करैः साधु कृतम्, अभिरामताधिके चन्द्रमसि सति यन्मीलितम् । जयिनीति मत्वर्थीयो नित्ययोगे । पदान्तरेऽप्युत्तरवाक्यगतस्य यदः स्वातन्त्र्यम् । यथा 'यं सर्वशैला' इत्यादौ ।

उत्तरवाक्यगतत्वमित्यनूद्यत्वपरत्वाभावोपलक्षणमित्याह—प्रागिति । साका-ङ्क्षः, अनूद्यत्वप्रत्ययनैयत्यात् ।

ननु धूमवान् वह्निमानित्यत्र यत्तदोरनुपादानेऽपि निराकांक्षप्रतिपत्त्या द्वयोरुपादानं निरर्थकमित्याह—द्वयोरित्यादि । 'स फाल्गुनो यस्य करे धनुर्लता' इत्यत्रानूद्यविधेययोरुत्तरपूर्वभावेऽपि यत्तद्भ्यामेवानूद्यविधेयताप्रतिपत्ति-रित्यत्र पौर्वापर्येणेत्युभयोपादानसार्थक्यम् । न तु पौर्वापर्यादिविरहे यत्तद्भ्या-मनूद्यविधेयभावावगम इति ।

ये नामेत्यादिलक्ष्ये व्यभिचारीत्याह—अनुपादान इत्यादि । सामर्थ्यात् पदद्वया-

उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥१९२॥
( मा० मा० २।७ )

अत्र य उत्पत्स्यते तं प्रतीति। एवञ्च तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वं प्रसिद्धम् ।

न चासाविति तच्छब्दार्थमाह—

असौ मरुच्चुम्बितचारुकेसरः
प्रसन्नताराऽधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो
वसन्तकालो हनुमानिवागतः ॥ १९३ ॥

अत्र हि न तच्छब्दार्थप्रतीतिः ।

---

क्षेपकत्वात् । ये नामेत्यादि । इह प्रकरणे[१] न केवलं कुर्वन्ति प्रथयन्ति विस्तारयन्ति । उत्पत्स्यते भविष्यति । अस्ति वर्त्तमानः । इयत्कालानुत्पन्नस्योत्पत्तिः कथमित्याह—कालो ह्ययमित्यादि । यदि वर्त्तमानस्तत् कथं न दृश्यत इत्याह—विपुलेत्यादि । पृथिव्या विस्तीर्णत्वेन यत्किञ्चिद् देशेऽस्तीत्यर्थः । उत्पत्स्यत इत्यादि । येऽवज्ञां विस्तारयन्ति तान् प्रति नैष यत्न इत्यस्य स्वोत्थापितप्रतीत्याकाङ्क्षाद्वारा यत्तदाक्षेपकत्वमिति पूर्ववाक्यादेव यत्तदोराक्षेपः, शब्दाकाङ्क्षायाः शब्देनैव पूरणात् । अतोऽध्याहृतयत्तत्पदाभ्यामेवोद्देश्यविधेयताऽवगमः ।

प्रकृते सङ्गमयति—अत्रेति । साकाङ्क्षत्वं यच्छब्दस्येत्यर्थः ।

ननु तददसोः प्रकृतवाचित्वेन तुल्यतयाऽदसैव तदर्थप्रतीतिरस्त्वित्याह—न चेति ।

तदर्थानभिधाने हेतुमाह—असाविति । केसरं किञ्जल्कं केसरो ग्रीवा रोम च । तारापतिश्चन्द्रः सुग्रीवश्च । वियुक्ता विरहिणी रामा नारी वियुक्तो रामो दाशरथिश्च । तदर्थाभिधाने यदर्थसाकाङ्क्षतया निराकाङ्क्ष्यप्रतीतिर्न स्यात् ।

---

१. मालतीमाधवाभ्यां प्रकरणभेद एव ।

प्रतीतौ वा——

करवालकरालदोःसहायो
युधि योऽसौ विजयार्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्ये
विनियुज्येत ततः कृतं कृतं स्यात् ॥१९४॥

अत्र स इत्यस्यानर्थक्यं भवेत् ।

अथ——

योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
स्वात्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥१९५॥

इतीदंशब्दवददःशब्दस्तच्छब्दार्थमभिधत्त इत्युच्यते, तर्ह्यत्रैव वाक्यान्तर उपादानमर्हति, न तत्रैव। यच्छब्दस्य हि निकटे स्थितः प्रसिद्धिं परामृशति । यथा——

---

अथ प्रकृतवाचिनस्तदःसमानार्थत्वेन नो यदपेक्षेत्याह—प्रतीतौ चेति । प्रकृतवाचित्वेनैव समानार्थत्वम्, नान्यथेत्यर्थः । विजयनामाऽर्जुनः पाण्डवः । स कर्णः । कृतं कृतं स्यात्, यत्कृतं तत् कृतमेव पाण्डवानां राज्यत्याजनादिकं कृतं तत्तथैव स्यात् । अन्यस्य सैनापत्ये तं विजित्य पाण्डवानां राज्यादिलाभात् कृतस्यानिर्वाह इत्यर्थः ।

अत्रादःशब्देन तदर्थप्रतीतौ तदन्तरस्यानर्थक्यमित्याह—स इत्यस्येत्यादि । न च तथा पौनरुक्त्याप्रतीतेः ।

अथेति । विकल्पोऽन्यसम्बन्धः । अविकल्पमभेदेन तच्छब्दार्थविधेयरूपम् ।

निकटे स्थितः समानलिङ्गविभक्तिकतया एकवाक्योपात्तः । तेन "विभाति मृगशावाक्षी येदं भुवनभूषणम् । धनं यस्य स ते पुत्र" इत्यादौ लिङ्गविभक्तिभेदाद् विधेयत्वावगमः ।

एवं विच्छेदेऽपि तथा, यथा "परदारापहर्त्ता यः स स्वर्गं नाभिगच्छति" इत्यत्र यत्या विच्छेदात् ।

किञ्च, एकत्र विधेयत्वबोधकस्य नान्यत्र प्रसिद्धिपरामर्शकता । यथा "न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्" (कुमार० ५।८३) इत्यत्र हि स इत्यस्य पूर्वं यत्पदार्थे विधेयत्वावगम[1]स्योत्तरत्रापि

---

१. अवगमस्योत्तरत्रापीति च० पु० पाठः ।

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताक्षैस्तदाऽनेन नूनं तदपि हारितम् ॥१९६॥
( वेणी सं० ५।५३ )

इत्यत्र तच्छब्दः ।

ननु कथम्—

कल्याणानां त्वमिह महतामीशिषे त्वं विधत्से
पुण्यां लक्ष्मीमथ मयि दृशं धेहि देव प्रसीद ।
यद् यत् पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् भूयसे मङ्गलाय ॥१९७॥
( मा० मा० ११४ )

अत्र हि यद् यदित्युक्त्वा तन्म इत्युक्तम् । उच्यते—यद् यदिति येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तं तथाभूतमेव तच्छब्देन परामृश्यते । तथा—

---

तथेति न प्रसिद्धिपरामर्शकता। अत एव तदनन्तरानुपादानेऽपि निराकाङ्क्षप्रतीतिरिति ।

यत्तत्प्रसिद्धम् । अनेन राज्ञा ।

ननूक्तविषयादन्यत्र यत्तत्पदयोः परस्परसाकाङ्क्षत्वं वक्ष्यमाणलक्ष्ये व्यभिचारीत्याह—कल्याणानामित्यादि। कल्याणजनकत्वात् तत्त्वोपचारः। विश्वस्मिन् मूर्त्तिर्यस्य धुर्यां भृत्यभारक्षमां धेहि, न तु देहि । यद्यन्महापातकानुपातकादिभेदानेकविधम् । जगन्नाथत्वेन मय्यप्युचितः प्रसादः । नम्रे प्रणते, तेन प्रणतभृत्ये प्रसादावश्यकता । भद्रं भद्रमुचितोचितम् ।

अत्रेति । अनेकयच्छब्दैकतच्छब्दयोरित्यर्थः । येन केनचिदित्यादि । वीप्सया तथैव प्रतिपत्तेः । तच्छब्देनैकेनेत्यर्थः । तदः प्रकृतवाचित्वेन यावत् तदुपस्थापितबोधनात्। यत्र विशेषो विवक्षितस्तत्र तत्पदेऽपि वीप्सा। यथा—

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥ (रघु० ६।६७)

यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव । ( माघ० ३।२६) इत्यादौ यत्क्रमेण त्यागस्तत्क्रमेण मालिन्यमित्यादि विशेषप्रतीतिः ।

लक्ष्यान्तरमाह—तथेत्यादि ।

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ।।१९८।।

अत्रार्यस्येति तातस्येति च वाच्यम्, न त्वनयोः समासे गुणीभावः कार्यः । एवं समासान्तरेष्वप्युदाहार्यम् ।

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्त्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ।।१९९।।

---

किं लोभेनेत्यादि । लक्ष्यस्य विमर्शोऽयम् । स इति विनयार्जवगुरुभक्त्यादिभिः प्रसिद्धः । मात्रा मातृद्वाराऽनुचितकारितया गौरवपरीहारेण भरतेति नामकीर्तनम् । अनुचितकारित्वाभावविमर्शे तु गुरुशब्दप्रयोगः ।

आर्यस्य तातस्येत्यादि । अनुज आर्यस्य, कलत्रं तातस्येत्यभिधाने षष्ठ्या स्वातन्त्र्येण सम्बन्धावगमात् । समासेऽपि सम्बन्धप्रतीतिरस्त्येवेत्याह— न त्विति । गुणीभाव इति समासे युक्तार्थत्वेन विशेषणभावनैयत्यात् ।

समासगतत्वेन पददोषतया सिंहगुहावलोकनन्यायेन पददोषस्य वाक्यदोषान्तर्निवेश इत्यभिधानमसत् वाक्यदोषत्वस्यैव सम्भवात् । तथाहि— अनुजे आर्यसम्बन्धं विधायानौचित्यकारित्वाभावो विधीयते । यत्रार्यसम्बन्धस्तत्र नानौचित्यमिति विहितविधेयत्वं विवक्षितम्, सम्बन्धस्य गुणीभावेन न तत्प्रतीतिः । आर्येत्यादि–मिथ्येत्याद्यनेकपदालम्बनाद् वाक्यदोषता । 'आर्यस्ये'त्यादि–'तातस्ये'त्यादिपदद्वयनिष्ठत्वेन वाक्यदोषत्वं ब्रुवाणो मूढ एव; मात्रानुचितं न कृतम्, तातसम्बन्धात्; गुरुणाऽपि न कृतमार्यसम्बन्धदिति पृथगन्वयेनैकवाक्यताविरहात् । एवमिति । समासान्तरे वाक्यगतत्वेनेत्यर्थः ।

विरुद्धमतिकारित्वमाह—श्रितेत्यादि । क्षमा क्षान्तिर्भूमिश्च । रक्ताऽनुरक्ता मत्वर्थीयात्प्रत्ययेन[१] रुधिरवती च । भूस्तत्स्थो जनो भूमिश्च । शिवं कल्याणं शिवा शृगाली च । विग्रहो युद्धं शरीरं च । असुखं दुःखम् । असवः प्राणाः खमिन्द्रियं च ।

---

१. आत्प्रत्ययेन कातन्त्रानुसारेण पाणिनिमते अर्श आदित्वादच् प्रत्ययः ।

अत्र क्षमादिगुणयुक्ताः सुखमासत इति विवक्षिते हता इति विरुद्धार्थप्रतीतिः ।

पदैकदेशे यथासम्भवम्—

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेन प्रियायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥२००॥
(विल्हणच० ५८)

अत्र 'त्वात्' इति ।

---

अत्र पृथक्सिद्धयोरागन्तुकसम्बन्धाश्रयणम्, तस्य क्षान्तौ गुणविशेषे बाधात्, तथा रक्तत्वस्य रुधिरत्वस्य भूस्थजने बाधात् । एवमालिङ्गन-कर्तृत्वस्य शिवे शुभादृष्टे क्षपणस्य नोदनस्य च युद्धे बाधात् लक्षणातः प्रागेव झटिति धरणाद्युपस्थित्योपश्लोक्यमानस्यानुचितशुभविरोध्यशुभ-प्रतिपादनया विरुद्धमतिकारिता ।

न चामङ्गलप्रतीत्याऽश्लीलत्वमेवेति वाच्यम्, उपाध्यसंकरत्वेन दोष-द्वयेऽप्यक्षतेः । एतेन[1]

तव कण्ठासृजा सिक्ता करवाललता द्विषाम् ।
प्रसूते समरारण्ये यशःकुसुमसञ्चयम् ॥

इत्यत्र सन्निधिदोषात् तव कण्ठासृक्प्रतीत्या विरुद्धमतिकारिता ।

पदैकदेशे श्रुतिकटुत्वमाह—अलमित्यादि ।

अत्र विरोधिनं शान्तमुपमर्द्य स्वविश्रान्तस्य शृङ्गारस्यात्यन्तमधुरत्वेन क्षुद्रापचारस्याप्यसहतया पदैकदेशश्रुतिकटोरप्यपकर्षकतेत्याह—अत्र त्वादिति। चपलत्वादित्यादिपदैकदेशस्थमित्यर्थः ।

---

१. एवञ्च तवेत्यादि गौ० पा० ।

यथा वा—

तद्गच्छ सिद्धयै कुरु देवकार्यमर्थोऽयमर्थान्तरलभ्य एव ।
अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ।। २०१ ।।
(कुमार० ३।१८)

अत्र द्धयै द्धयै इति च श्रुतिकटु ।

यश्चाप्सरोविभ्रममण्डनानां
सम्पादयित्रीं शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागा-
मकालसन्ध्यामिव धातुमत्ताम् ।। २०२ ।।
(कुमार० १।४)

अत्र 'मत्ता' शब्दः क्षीबार्थे निहतार्थः ।

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरुङ्गेक्षणा ।। २०३ ।।

---

यथा वेति । गच्छेत्यमङ्गलसूचनम् । देवकार्यम्, न त्वात्मानः ।

धातुमत्तामिति । मतुबुत्तरतल्प्रत्ययेन सम्बन्धाभिधानं तदपेक्षया क्षीबार्थः प्रसिद्धः ।

च्युतसंस्कृतेरनुशासनोल्लङ्घनस्य प्रकृतिप्रत्ययोभयगामित्वम्, न त्वेकैकत्र, एकैकस्याननुशासनात् । तेन तस्य न पदावयवसम्भवः । एवमेकदेशिना प्रयुक्तत्वमपि, पदावयवस्याम्नातत्वविरहात् । नासमर्थत्वमपि, क्वचिदप्यर्थेऽवयवस्य पाठविरहात् । नानुचितार्थत्वमपि, निन्दितारोपेणैव तिरस्कारप्रतीतेः । पदार्थस्यैवारोप्यमाणत्वात् ।

आदावित्यादि ।

अत्र 'दृशाम्' इति बहुवचनं निरर्थकम्, कुरङ्गेक्षणाया एकस्या एवोपादानात्। न च "असंवलितैः प्रेमार्द्रार्द्रैः" ( अ० श० ) इत्यादिव्यापारभेदाद् वाच्यं बहुत्वम्, व्यापाराणामनुपादानात्।

न च व्यापारेऽत्र दृक्शब्दो वर्तते, 'कुरुत' इत्यात्मनेपदमप्यनर्थकं प्रधानक्रियाफलस्य कर्त्रसम्बन्धे कर्त्रभिप्रायक्रियाफलस्याभावात्।

चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥२०५॥
(बालराम० १।३७)

---

अनर्थकमिति। बहुत्वासम्भवात् हेतुमाह—एकस्या इति।

ननु दृक्शब्दाद् द्विवचनोपादानेऽपि वृत्तपूरणसम्भवे कथं बहुवचनस्य तदर्थकता? मैवम्, तत्र द्विवचने तद्विशेषणस्यापि सन्तापितेत्यस्य तदुपादाने वृत्तभङ्गप्रसङ्गाद्विशेष्यबहुवचनाधीनमेव विशेषणगतबहुवचनमिति विशिष्य तदुपादानम्।

ननु दृशेर्भावक्विपा व्यापाराभिधानम्, व्यापाराश्च बहव इत्याह—न चेत्यादि। अञ्जनलेपादीनां क्रियायामसम्भवात्। न च 'बहुषु बहुवचनम्' इत्यनुशासनोल्लङ्घनादसाधुता, बाह्याध्यात्मिकभावेनैव गोलकेन्द्रिय[१]-बहुत्वापेक्षया तदुपपत्तेः। एवं विवक्षा तु केवलं पूरणायेति भावः।

न चेत्यादि—कर्तृगतफलाविवक्षायामपि कातन्त्रेणात्मनेपदव्युत्पत्तेर्नासाधुत्वं व्याकरणव्युत्पत्तिसामान्याभावस्यैव च्युतसंस्कृतत्वात्। कर्तृगतफलाविवक्षायामात्मनेपदप्रयोगं केवलं वृत्तपूरणायेति दोषः।

चापाचार्य इत्यादि। आचार्यो गुरुः। व्यस्तः क्षिप्तः। उदधिसदनमित्यन्वयः। हन्तकारोऽतिथिबलिः। किमु किं नु। चन्द्रहासः खड्गः।

अथ च कलङ्कित्वेन चन्द्रमपि हसतीति स्त्रीवधपातकिना भवत्परशुना सहास्य स्पर्द्धाबन्धो नोचित इति ध्वनिः।

---

१. गोलोकेन्द्रियगतबहुत्वेति गौ० पा०।

अत्र 'विजेय' इति कृत्यप्रत्ययः क्त-प्रत्ययार्थेऽवाचकः ।

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः ।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ।।२०६।।

अत्र 'पेलव'शब्दः ।

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ।।२०७।।

अत्र 'पूय'शब्दः ।

विनयप्रणयैककेतनं सततं योऽभवदङ्ग तादृशः ।
कथमद्य स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः ।।२०८।।

अत्र 'प्रेत'शब्दः ।

कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ।।२०९।।

अत्र किं पूर्वं साधुः, उत साधुषु चरतीति सन्देहः ।

---

क्तप्रत्ययार्थेऽतीतकाले अवाचक इति। अनिर्दिष्टार्थप्रत्ययस्य कालत्रय-विधाने योग्यताऽवच्छेदकतयाऽतीतत्वेनान्वयः, तद्रूपेण च कृत्यप्रत्ययस्य वृत्तिविरहः, अर्हार्थकृत्यप्रत्ययस्य विधानादिति भावः ।

अतीति । पेलवं कोमलम् । परिमितं सङ्क्षिप्तार्थबोधकम्, लघुतरमल्पम्। अत्र पेलवशब्दस्याद्याक्षरद्वयं पुंव्यञ्जनप्रत्यायकम् ।

य इति । सुखमादिः । परिशीलनमभ्यासः । कीलनं संस्कारदार्ढ्यम्, ऊर्जितानां बलवताम्, ऊर्जितं बलम्। 'पूय'शब्दो व्रणक्लेदबोधकः, पदैकदेशत्वेन च शक्तिविरहाद् व्यञ्जकता ।

विनयेति। विनयः स्तवादिः, प्रणयो वशता। अङ्ग सादरसम्बुद्धौ। अभि-प्रेतमभिलषितम् । प्रेतो मृतः ।

कस्मिन्निति । उत्तपते उज्ज्वलति । भूतपूर्वार्थे चरट् प्रत्ययः। चरतीति चर इति च । प्रकरणाद्यभावात् संदेहः ।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥२१०॥

अत्र 'वचः'शब्देन गीःशब्दो लक्ष्यते । अत्र खलु न केवलं पूर्वपदमेव, यावदुत्तरपदमपि पर्यायपरिवर्तनं न सहते । जलध्यादावुत्तरपदमेव । वडवाऽनलादौ पूर्वपदम् ।

यद्यप्यसमर्थस्यैवाप्रयुक्तादयः केचन भेदाः, तथाप्यन्यैरलङ्कारकारैर्विभागेन दर्शिता इति भेदप्रदर्शनेनोदाहर्त्तव्या इति च विभज्योक्ताः ।

**प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धिहतवृत्तम् ।**
**न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥५३॥**
**अर्थान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् ।**
**अपदस्थपदसमासं सङ्कीर्णं गर्भितं प्रसिद्धिहतम् ॥५४॥**
**भग्नप्रक्रममक्रमममतपरार्थं च वाक्यमेव तथा ।**

---

किमुच्यत इति । सर्वत्र मौलावेक एव मणिः । गीःशब्दो लक्ष्यत इति । तदैव गीर्वाणस्य देवस्य प्रतीतिः । यावदुत्तरपदमिति—गीःशरपदेन देवताया अप्रतीतेः । जलध्यादाविति । जलधरजलपात्रादिना जलध्यप्रत्यायनात् । वडवेत्यादि । अश्वानलेत्यादिनाऽपि वडवाग्नेरबोधनात् ।

ननु यत्र यस्य प्रयोगस्तत्र तस्यावबोधकत्वमित्यप्रयुक्तोऽसमर्थ एव । एवं विरुद्धमतिकृदपि शक्यान्तरविरुद्धशक्यान्तरबोधकमिति, तदपि तथैवेति कथममी पृथग्दोषा इत्याह—यद्यपीत्यादि । भेदा विशेषाः । अन्यालङ्कारिकपथानुवृत्त्याऽविवेचकत्वहानिरित्याह—भेदप्रदर्शनेत्यादि ।

अयमर्थः—अबोधकत्वसामान्यधर्मोपगमे वैजात्यसम्भवेऽपि तत्तत्स्फूर्त्या तत्तद्विशेषरूपज्ञानेऽपि रसापकर्ष इति युक्तस्तन्मूलको भेदनिर्देश इत्यर्थः ।

उदाहर्तव्या इत्यावश्यकार्थे कृत्यः । अन्यथा रसापकर्षकत्वेन स्थूलोपाधिना दोषैकत्वं प्रसज्येतेति भावः ।

वाक्यमात्रगामिदोषानाह—प्रतिकूलेत्यादि । वाक्यमेव, न तु पदम् । तथेति दुष्टमित्यर्थः ।

रसानुगुणत्वं वर्णानां वक्ष्यते। तद्विपरीतत्वं प्रतिकूलत्वम्।
यथा शृङ्गारे—

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम्।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥२११॥

रौद्रे—

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद् रामेण कृतं तदेव कुरुते द्रोणात्मजः[१] क्रोधनः ॥२१२॥
(वेणी० ३।३३)

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम्।

यथा—

---

आकाङ्क्षायोग्यताऽऽसत्तितात्पर्यान्यतमवैगुण्येनामीषां दूषकतेति तत्र तत्र वक्ष्यामः।

प्रकृतरसाननुगुणवर्णत्वं प्रतिकूलवर्णता। अननुगुणवर्णानां च प्रकृतरसव्यञ्जने स्वरूपायोग्यत्वमिति निराकाङ्क्षता। न च श्रुतिकटुना सह क्वचिदेकत्वम्, उपाध्योर्विजातीयत्वात्।

अकुण्ठा परपरतो बलवती। कलकण्ठि कोकिले, प्रोत्साहनाय सखीसम्बोधनं वा।

अत्र शृङ्गारपरिपन्थिन ओजसो व्यञ्जकानां वर्णानां शृङ्गारव्यञ्जने स्वरूपायोग्यत्वम्, घटानयनप्रत्यये 'घटः कर्मत्वमानयनं कृतिः' इत्यस्येव।

देश इत्यादि। सोऽयं कुरुक्षेत्ररूपः। जलपदं बाहुल्यद्योतकम्। अहिता वैरिणः। घस्मराणि भोक्तॄणि। रामेण भार्गवेण। आत्मजपदेन द्रोण एवाहमिति बोधनम्। विकटा दृढप्राणाः।

समुचितरचनानिदर्शनमाह—यथेति।

---

१. 'द्रौणायनिः' इति तु प्रायिकः पाठः। टीकाकृदुद्धृतपाठ एव साधीयान्।

प्रागप्राप्त निशुम्भशाम्भवधनुर्द्वेधाविधाऽऽविर्भवत्
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् ।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्टपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥२१३॥
(वीरच० २।३३)

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः।
उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत् ।
धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥२१४॥
विसन्धि सन्धेर्वैरूप्यं विश्लेषेऽश्लीलत्वं कष्टत्वं च ।

---

निशुम्भो नमनम्, द्वेधाविधा द्वैधीकरणम् । आविर्भावेन क्रोधस्य सदातनता । अपविद्धश्चलितः । अशिथिलश्चिरस्थायी । पूर्वापरिचयादतिथित्वम् । अतिथेः पीठारोहणमुचितमिति पीठत्वनिरूपणम् । खण्डयतीति खण्डः, तथाभूतः परशुर्यस्य । तेन यद्धनुस्त्वया खण्डितम्, तत्परशुना त्वामपि खण्डयिष्यामीति ध्वनिः ।

ननु साध्यविकलो दृष्टान्तः चतुर्थपादे दीर्घसमासाद्यभावादित्याह—यत्रेति । चतुर्थपादे गुरुस्मरणेन भावोद्रेकात् क्रोधस्य तिरस्कृतेरुचितमेव मसृणवर्णरचनमिति भावः ।

उपहतः स्वरूपात् प्रच्युतः । तदाह—उत्वमिति । लोपेऽपि स्वरूपप्रच्यवः । चकारेण दोषद्वित्वावगमः, पृथगेव वैरस्योत्पादनात् । धीरः पण्डितः, अत एव विनीतः ।

अत्रौकारपरम्परया बन्धशैथिल्यम् । बन्धस्य गाढत्वेन यथा चमत्कारः, न तथा शैथिल्येनेति बन्धशैथिल्यम् । तत्र स्वरूपायोग्यमित्याकाङ्क्षाविघटनम्, अतो रचनाश्रयाणां वाक्यदोषता । रचना व्यङ्ग्यस्यैव रसस्य विभावादिक्रमेणोपचयादिति प्रतिकूलवर्णादिषु पञ्चसु पतत्प्रकर्षेऽप्यवधेयम् ।

सन्धेरित्यादि[१] वैरूप्यमर्थः । परः सन्निकर्षः सन्धिः संहितारूपः । विश्लेषः कार्याजनकत्वम् । इदमपि तस्य वैरूप्यम्, बन्धशैथिल्यदायित्वात् । सन्धिकार्यञ्च समानलक्षणदीर्घादिकम् । कष्टत्वं श्रुतिकटुत्वम् ।

---

१. विश्लेष इति प्रतीकमुचितम्, न च मातृकासु तदुपलभ्यते।

आद्यं यथा—

राजन् विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसम्पदमेत्य भातः ॥२१५॥

यथा वा—

तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः॥
निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः ॥२१६॥

अत्र संहितां न करोमीति स्वेच्छयाऽसकृदपि दोषः।

प्रगृह्यादिहेतुकत्वेन त्वसकृत्।

---

राजन्नित्यादि। तानि इन्दोरित्यत्र विवक्षाविरहात् समानलक्षणदीर्घाभावेनासाधुत्वम्, विकल्पाननुशासनात्। तदुक्तम्—

संहितैकपदे नित्या नित्या धातूपसर्गयोः।
सूत्रेष्वपि तथा नित्या सैवान्यत्र विभाषया॥ इति।

उचितयोः कर्मणोरनुवृत्ती इत्यातन्वती इत्यस्य कर्म। विजयसम्पदमेत्य भात इत्यन्वय इत्यर्थः।

अत्र [1]'द्विवचनमनौ'विति सन्धिनिषेधात् स्वरयोर्विश्लेषः।

प्रपञ्चयति—यथा वेति।

तत उदित इत्यादि। विसर्गलोपे पुनःसन्धाननिषेधः सौत्रः। एवं 'निजवंश उदात्त' इत्यत्र 'यलोपेऽयादीनाम्'[2] इत्यादिना अकारोकारयोर्विश्लेषणम्।

यत्तु 'यथा वेत्यादिना विसर्गलोपस्यापि सन्धिभेदत्वं दर्शितम्, लुप्तविसर्गत्वस्य पृथगुपादानं प्रपञ्चाय' इत्युक्तं तदसत्, विसर्गलोपकृतस्य सन्ध्यभावस्यैव वैरस्यहेतुत्वात्। न तु विसर्गलोपस्य तस्य तत्प्रयोजकत्वात्। स्वेच्छया, न तु संहितानिषेधकसूत्रपारतन्त्र्येण। प्रगृह्येत्यादि। 'ईदूदेद् द्विवचनं प्रगृह्यम्' इत्यधिकारे 'प्लुतप्रगृह्या अचि' इति सन्धिनिषेधः। आदि-

---

१.-२. इमे हि कातन्त्रसूत्रे।

वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्तपते पत्री ततोऽत्रैव रुचिं कुरु ॥२१७॥

अत्र सन्धावश्लीलता ।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥२१८॥

हतं लक्षणानुसरणेऽप्यश्रव्यम् । अप्राप्तगुरुभावान्तलघु रसाननुगुणं च वृत्तं यत्र । क्रमेणोदाहरणम्—

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात् ॥२१९॥

---

शब्दात् 'बहुवचनममी' 'विसर्जनीयलोपेन पुनः सन्धिः' 'अयादीनां यवलोप' इत्यादिपरिग्रहः।[१] असकृदिति तदैव शैथिल्योदयात् । अत एव प्रतिकूलवर्णादीनां बहुव्यापकतायामेव दूषकता ।

वेगादित्यादि । लण्डार्चिकुशब्दौ पुंव्यञ्जनवराङ्गबोधकौ । तयोः सन्धानेनैव निष्पत्तिः। चलन्निति डामरेति रुचिमिति कुर्वीति बहुपदावलम्बनाद् वाक्यदोषता ।

उर्वी महती । आली पंक्तिः । अन्ते समीपे । ऋजु यथा स्यात् तथा । तर्वाली तरुश्रेणिः । विशेषणविशेष्यभावेनान्वयाद् वाक्यगामिता । सन्धानकृतमेव हि दुःश्रवत्वम् ।

हतं निन्दितं लक्षणं सूत्रम् । वर्णानां गुरुलघुसंख्याविन्यासनियमो वृत्तम् । छन्दोलक्षणाननुसरणे काव्यत्वानिष्पत्तेस्तदनुसरणं विशेषणम् । न प्राप्तो गुरुभावो येन तथाभूतोऽन्तलघुर्यत्र ।

अमृतमिति । द्वितीयममृतपदमास्वादातिशयपरम् । मध्यस्थः सर्वत्र समः । रसानामन्तरं तारतम्यम् ।

---

१. एतान्यपि कातन्त्रसूत्राणि टीकायाम्, अन्तरालवाक्ये तु पाणिनीयानुशासनोल्लेख इति तु विचित्रः पन्थाः ।

अत्र 'यदिहान्यत् स्वादु स्यात्' इत्यश्रव्यम् ।

यथा वा—

जं परिहरिउं तीरइ मणअं पि ण सुन्दरत्तणगुणेण ।
अअं णवर जस्स दोसो पडिवक्खेहिं पि पडिवण्णो ॥२२०॥

अत्र द्वितीयतृतीयगणौ सकारभकारौ ।

विकसितसहकारतारहारि-
परिमलपुञ्जितगुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्री-
र्हरति मुनेरपि मानसं वसन्तः ॥२२१॥

अत्र हारिप्रमुदितसौरभेति पाठो युक्तः ।

यथा वा—

---

अत्र वृत्ते षष्ठे चतुर्थे सप्तमे च यतौ श्रव्यता । यथात्रैव पादत्रये । चतुर्थपादे तु हेत्यत्र परपदसन्धानेन यतेरभावादश्रव्यता । अस्यैव 'स्वरसन्ध्यकृते प्रायेण' इति वामनोक्त'प्राय'पदेन सूत्रणम् ।

वर्णवृत्तमुक्त्वा मात्रावृत्तमाह—यथा वेति ।

यः परिहर्तुं शक्यते मनागपि न सौन्दर्यगुणेन ।
अथ केवलं तस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः ॥

सकारभकारावन्तगुर्वादिगुरुद्विमात्रौ प्रथमगणान्ते यत्यकरणादश्रव्यौ ।

विकसितेत्यादि । परिमलेन पुंजितः सन् गुञ्जितो द्विरेफो यत्र ।

पादान्तलघोर्गुरुत्वं वसन्ततिलकेन्द्रवज्रादिष्वेव । 'हारि' इत्यत्र पादमध्ये पाठ[1]विश्रान्तेरभावेन गौरवाभावात् । 'प्रमुदित'[2] पाठे तु संयोगप्रथमवर्णस्य पाठविलम्बेन गौरवोत्पत्तिः ।

लक्ष्यान्तरमाह—यथा वेत्यादि ।

---

१. पठितविश्रान्तेरिति च० पु० पाठः ।
२. 'प्रमुदितेत्यादपाठे तु' इति स्यात् ।

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलाद्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ।। २२२ ।।

अत्र 'अस्त्राणि वस्त्राण्यपीति पाठे लघुरपि गुरुत्वं भजते ।

हा नृप हा बुध हा कविबन्धो
वीरसहस्रसमाश्रय देव ।
मुग्धविदग्धसभान्तररत्न
क्वासि गतः क्व वयं च तवैते ।। २२३ ।।

हास्यरसव्यञ्जककमेतद् वृत्तम् ।

न्यूनपदं यथा—

---

रोहणः पर्वतविशेषः । सम्भारा उपकरणानि । प्रतिपत्तिलोपो मोहः । स च भयात् कामाच्चेत्यर्थः ।

अत्र 'च'कारस्य लघुप्रयत्नोच्चार्यतया गौरवाभावः । पाठान्तरे तु 'ण्य'कारस्य संयुक्ततया गुरुप्रयत्नोच्चारणेन कालविलम्बात् 'पि'शब्दोच्चारणे विश्रान्तिलाभाद् गुरुभावः ।

हा नृपेत्यादि । अत्र करुणरसे पुष्पिताग्रादीनामेवानुगुणत्वम्, अस्य तु दोधकवृत्तस्य प्रतिपदविच्छेदशालिनो हास्यरसानुगुणता । [१]पृथ्वीस्रग्धरादीनां शृङ्गारादौ, शिखरिणी-मन्दाक्रान्तादीनां वीरादावानुगुण्यम् ।

अनुपात्तविवक्षितान्वयप्रतियोग्युपस्थापकं न्यूनपदम् । न्यूनाधिककथितैः सह 'पद'पदस्य प्रत्येकमन्वयः ।

---

१. नायं निषेधः सर्ववादिसम्मतः, रसान्तरेष्वपि दोषावृत्तिप्रयोगदर्शनात् ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥२२४॥
(वेणी० २।११)

अत्रास्माभिरिति खिन्न इत्यस्मात् पूर्वमित्थमिति च ।

अधिकपदं यथा—

स्फटिकाकृतिनिर्मलः प्रकामं
प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्धसमन्वितोक्तियुक्तिः
प्रतिमल्लास्तमोदयः स कोऽपि ॥२१४॥

अत्र 'आकृति'शब्दः ।

यथा वा—

इदमनुचितमक्रमश्च पुंसां
यदिह जरत्स्वपि मान्मथो विकारः ।
यदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा ॥२२५॥

---

अत्रेत्यादि। वल्कलधरत्वविशेषणस्य विशेष्यसाकांक्षत्वमावश्यकमित्याह—अस्माभिरितीति । इत्थमित्यादि। तदैव मात्सर्यानौचित्यम् । इत्थं तथाभूतंनृपसुतदर्शनादिभिः ।

अधिकमन्वयायाप्रतियोगि ।

आकृतिशब्द इति । आकृतेरवयवसंयोगस्य गुणस्य शुक्लताविरहात् । तदाश्रये तदन्वये आकृतेरन्वयाप्रतियोगित्वम् ।

खण्डवाक्यान्वये महावाक्यानुपयोगेऽप्यधिकत्वमित्याह—यथा वेति ।

अनुचितं लोकविरुद्धम् । अक्रमः शास्त्रविरोधः । शैशवयौवनजरासु विद्याविषयोपभोगधर्मा इति हि शास्त्रम् । अवधिः सीमा ।

अत्र कृतमिति । कृतं प्रत्युत क्रमभङ्गमावहति । तथा च 'यदपि च न कुरङ्गलोचनानाम्' इति पाठे निराकाङ्क्षैव प्रतीतिः ।

कथितपदं यथा—

अधिकरतलतल्पं कल्पितस्वापलीला-
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मर नरपतिलीलायौवराज्याभिषेकम् ।।३२७।।

अत्र लीलेति ।

---

कृतमितीति । अधिकमित्यनुषज्यते । नितम्बिनीनां जीवितं रतं वा स्तनपतनावधि यन्न भवति तदप्यनुचितमित्येतावतैव निराकाङ्क्षप्रतिपत्तेः । कृतं प्रत्युतेत्यादि । स्त्रीपुंसयोरनौचित्याभिधानं हि प्रस्तावः; कृतमित्यादिविधेरनौचित्याभिधानेन तद्भङ्गः । तेनास्य विवक्षितान्वयप्रतियोगित्वं सर्वथैव नास्तीति ध्वनितम् ।

पाठान्तरेऽस्यान्वयानुयोगित्वं दर्शयति—यदपि चेत्यादि । अधिके त्वाकाङ्क्षाविरहः स्फुट एव ।

कथितपदमाह—अधीत्यादि । कोमलत्वेन तल्पता । स्वापलीलाः शयनसौन्दर्यम् । परिमिलनं दृढसम्बन्धः । तेन निमीलन् विलीयमानः पाण्डिमा यस्याम् । पाली स्थली करस्य गण्डस्य च दृढसम्बन्धेन रक्तिमोदयाद् विरहपाण्डिमतिरोधानम् । अञ्जसा तत्त्वतः कथय । नरपतिलीला नृपतिचातुर्यमवश्यवशतापादनम् । तत्र युवराजत्वं वृद्धेन स्मरेण तत्र कर्मण्यक्षमतया यूना तन्निर्वाहणम् । नृपतिचातुर्यं स्मरकर्तृकम् । कस्य यौवराज्याभिषेकं व्यञ्जयतीत्यर्थः । तेन स्मरादपि वशीकरणक्षमताऽवगमः ।

अत्रेत्यादि । लीला लीलेति पुनरुक्तमिति सम्बन्धः । द्विप्रयुक्तमेकं पदमुद्देश्यप्रतिनिर्देश्यविधेयार्थयोरभेदप्रत्यभिज्ञानजननैयत्येन या स्वापलीला, तत्रैव यौवराज्यमिति प्रत्ययमुत्पादयति । प्रकृते तु न तद्विवक्षितमिति बीजम् । सत्यप्यर्थभेदतात्पर्ये पादैक्यदोषादर्थैक्यप्रतिभासः ।

पतत्प्रकर्षं यथा—

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत् शूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥३२८॥

समाप्तपुनरात्तं यथा—

क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकाऽपसारणभुजाक्षेपस्खलत्कङ्कण-[1]
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥३२९॥

---

पतत्प्रकर्षमाह कः क इत्यादि । कः कः कुत्र न, अपि तु सर्व एव सर्वत्रैव । घुर्घुरः शब्दभेदः । घुरी घोणा । अरण्यमहिषाणां स्वाश्रयोन्मूलनाद् मदोत्कटता । सिंहीविषयकः स्नेहस्तज्जन्यो विलासः, दन्तेन कण्डूयनादिः । पञ्चाननः सर्वदिक्प्रसारितदृष्टिविभवः ।

अत्र शूकरेभ्यः स्वभावतः करिणां देवीयुद्धप्रतिनायकजातीयत्वेन यमवाहनत्वेनातिक्रोधनतया च तदपेक्षयाऽपि महिषाणां बलवत्त्वेन तत्तद्वर्णने समुचितस्यानुप्रासप्रकर्षस्य भङ्गः कृतः । परपरतोऽनुप्रासापकर्षः स्फुट एवेति ।

समाप्तेत्यादि । अत्र केचिद् वाक्ये समाप्ते सति पुनरुपात्तं विशेषणमित्याहुः, तन्न, नववय इत्यादेः सकृदेवोपादानेन पुनः शब्दानन्वयात् । विशेषणान्तरापेक्षयाऽन्वये तु 'घटोऽस्ति मृण्मयः' इत्यत्राव्याप्तेः, विशेषणान्तरानुपादानात् । जातान्तरापेक्षया जातमात्रे पुनर्जात इति प्रयोगापत्तेश्च ।

अन्ये तु समाप्तं वाक्यं पुनरुपात्तं वदन्ति, तदप्यसत्; सर्वत्रैव वाक्यावयवस्यावर्तनेन वाक्यावृत्तेरसम्भवात् ।

मिश्रास्तु 'समाप्तं विशेष्यं पुनरुपात्तमावृत्तं यत्र' इति वदन्ति, तदपि न, प्रकृतेऽसम्भवात्, उद्देश्यस्य विशेष्यत्वविरहात् । उद्देश्यविधेयत्वविशेष्यविशेषणत्वयोर्भेदस्यानुभविकत्वात् । एकविवक्षायामन्यत्राव्याप्तेः । किं चात्रैव

---

१. क्षेपः स्खलत्कङ्कणः इति क्वाचित्कः पाठः ।

द्वितीयार्धगतैकवाचकशेषं प्रथमार्धं यथा—

'नववयोलास्याय गीतं यथा'[1] इति पाठे दोषप्रसङ्गात्। न चेष्टापत्तिः, अनुकर्षस्य चार्थस्य तथेत्यस्योपादाने दोषाननुभवात्। उच्यते—समाप्तं जनितान्वयबोधमनुकर्षकस्योपादानं विना पुनरात्तमावृत्तं यत्रेति बोद्धव्यम्। तेन 'अहो विमलं जलं नद्याः कच्छे महिषश्चरति' इत्यत्र सत्यपि तात्पर्ये तद्ग्राहकस्यानुकर्षकस्योपादानानुपादानाभ्यां दोषाभावदोषयोः प्रसर इत्यवधेयम्। तेनोत्थाप्याकाङ्क्षा[2]स्थलमस्य विषयः।

अयमुदयति मुद्राभञ्जनः पद्मिनीना-
　　मुदयगिरिवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
　　कुपितकपिकपोलक्रोडताम्रस्तमांसि॥

इत्यत्र विशेषणमर्यादया विशेष्यलाभस्थले 'अयं'पदस्य क्रियान्वयदशायां विनिगमनाभावात् सूर्यमात्रगामियावद्विशेषणसाकाङ्क्षत्वेन समाप्तता। 'अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः' ( शकु० २।२७ ) इत्यत्र प्रमाणाधिकस्यैव श्वासस्य वेपथुजननात् क्रियाऽन्वयेन वाक्यसमाप्तिरिति न प्रसङ्गः। 'स्वर्णमयो घटः सुन्दरः' इत्यत्र घटमात्रस्यावृत्तौ दोषः, न विशिष्टस्य, तस्याजनितान्वयबोधत्वात्। वैशिष्ट्यस्यान्वयितानवच्छेदकत्वात्।

अर्द्धेन यत्याख्यविच्छेदेनान्तरितो व्यवहित एको वाचको यस्य। अर्द्धपदं विच्छेदपरम्। तेन पराार्द्धयोर्द्वयोरपि ग्रहणमुभयत्रान्ते, यतेरुद्भूतत्वात्। तेन 'जगाम सुन्दरी नारी कुब्जं यस्या दिनं निशा' इत्यत्रापि द्वितीयपादे कुब्जपदोपादानादयमेव दोषः। एकमनन्वितं न पुनरद्वितीयम्, तेनार्द्धान्तरे अनेकपदोपादानेऽपि प्रसङ्गः। यथा—

दृष्टस्तव　कुरङ्गाक्षि　जगन्मोहनलोचनः।
मया प्रियः स्मरो यस्य न समः कः परो युवा॥

इत्यत्र मयेति प्रिय इति च पदद्वयं परार्द्धे अनन्वितं पूर्वार्द्धसाकाङ्क्षं चेति दुष्टमेव। किञ्च—

---

१. 'गीतं तथा' इति क० पु० पाठः।
२. काङ्क्षस्थलेऽस्येति च० पु० पाठः।

मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ॥३३०॥
( बा० रा० ६।३६ )

---

तव तुल्यः प्रभो नास्ति भुवनत्रितयोदरे ।
राजा दानदयाशील........................॥

इत्यत्र न प्रसङ्गः, 'राज'पदस्य दानादिपदान्वितत्वेनाकाङ्क्षाविघटनविरहात् ।

वाचकपदोपादानेन व्यञ्जनायां न प्रसङ्ग इति विशिष्य लक्ष्ये वक्ष्यते–द्वितीयेत्यादि । द्वितीयार्धान्वयप्रतियोगिनः प्रथमार्धगतत्वे प्रागेव तदुपस्थितेरन्वयबोधे न विलम्ब इति तद्वारणाय प्रथमद्वितीयपदाभ्यामर्धं विशेषितम् । शेषः अवशिष्टः प्रथमार्धसम्बन्धी प्रथमार्द्धाकाङ्क्षितः, तेन—

कृष्णः पुनातु जगतीं दैत्यदर्पनिसूदनः ।
नवनीरदनीलाभः........ ................॥

इत्यत्र समाप्तपुनरात्तेर्न प्रसङ्गः, प्रथमार्द्धस्य 'नव' इत्यादिनिराकाङ्क्षत्वात् । तेन विनाऽप्यन्वयबोधजननात् ।

मसृणेत्यादि । भूः सदर्भा, तन्मसृणचरणपातं गम्यताम् । एवमुत्तरत्रापि । पथिक्यो या वध्वस्ताभिः । अत एव पथि प्रज्ञतया तदुपचारोपदेशः । वीक्षिता यावद्दर्शनं दृष्टा ।

अत्र परार्द्धपतितस्य तत्पदस्य विलम्बेनोपस्थित्यान्वयबोधविलम्ब इति बीजम् ।

ननु भूसदर्भत्वमणचसृरणपातयोः कठोरघर्ममूर्द्धावगुण्ठनयोश्च हेतुहेतुमद्भावेनान्वयोपपत्तौ किं तत्पदापेक्षणेनेति चेत्, न; सदर्भा भूः मसृणचरणपातस्य कठोरघर्मः सिचयान्तरचनस्य हेतुरित्युपदिष्टेति इति न, शाब्दस्य हेतुत्वस्यापेक्षणीयत्वात् । हेतुहेतुमद्भावव्युत्पत्तौ चान्यत्रापि सदर्भस्थले मसृणचरणपातो भवतीत्यभिप्रेत्यैव लक्षणे वाचकपदोपन्यासः । एतेन 'तदिति' इत्यखण्ड एवायं निपातः प्रागुक्तपरामर्शकः । तथा च भूः सदर्भेत्यार्थहेतुत्वम्, तथोत्तरत्रापीति नात्र दोष इति केनचित् प्रलपितं मिश्रेण, तदपास्तम् । उक्तरीत्या हेतुत्वस्यार्थत्वविरहाद् वाक्यान्तःपातविरहान्न संकीर्णता ।

अभवन्मत इष्टो योगः सम्बन्धो यत्र तत् । यथा—
येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।
येषां हुङ्कृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किञ्चित् प्रवादोचितम् ॥३३१॥

अत्र 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इत्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परसमन्वये यैरित्यत्र विशेष्याप्रतीतिरिति । 'क्षपाचारिभिः' इति पाठे युज्यते समन्वयः ।

---

अभवन्निति । विवक्षितसम्बन्धानुपस्थितिर्लक्षणम् । 'अभवन्नि'ति नित्यप्रवृत्तवर्तमानपरेण शत्रा सदातनसम्बन्धाभावं बोधयता स्वरूपायोग्यत्वमभिहितम् । तेन विधेयाविमर्शे नातिव्याप्तिः, तत्र रचनान्यथात्वे सम्बन्धोपपत्तेः ।

मिश्रास्तु 'द्वयोः सम्बन्धानुपपत्तिर्लक्षणम्, विधेयाविमर्शे तु विधेयस्यैव तत्त्वानुपपत्तिः' इत्याहुः, तन्न, 'न्यक्कारो ह्ययमेव' इत्यादौ विवक्षितस्य विधेयत्वस्यानूद्यत्वस्य चानुपपत्त्याऽतिव्याप्तेर्दुरुद्धरत्वात् ।

येषामित्यादि । त्रिदशेभ ऐरावतः । दानं मदजलम् । उष्मणां नदीशोषणमुचितम् । नन्दनमिन्द्रोपवनम् । साधारणोपभोग्यत्वेन तरुत्वोक्तिः । तैः क्षपाचारिभिः । तस्य रावणस्य परितोषजनकं प्रवादोचितं सदसि कथनयोग्यम् ।

अत्रेति । गुणानामनूद्यानां परार्थत्वाद् विधेयत्वात् । समत्वं केवलमनूद्यत्वं विधेयत्वं वा परस्परसमन्वये एकविधेयसङ्गतिरूपे, अन्यथा वाक्यभेदप्रसङ्गात् । विशेष्याप्रतीतिरिति । यैरिति क्षपाचारिणामिति पदयोर्भिन्नविभक्तिकयोरभेदान्वये स्वरूपायोग्यत्वात् ।

केचित्तु 'समन्वय' इति पाठमसङ्गतं पश्यन्तोऽसमन्वय इति मन्यन्ते, तन्न; उक्तरीत्योपपत्तौ पाठान्तरकल्पनाऽनौचित्यात् । विशेष्याप्रतीतावसमन्वयानुवादवैफल्यात्, समन्वयसम्भवेऽपि वैयधिकरण्येन विशेषणविशेष्यभावानुपपत्तेः ।

ननु तृतीयान्तपाठकल्पने षष्ठ्यन्तानन्वयतादवस्थ्यमिति चेत्, न; यावदर्थपरामर्शक'तत्'पदेन सह विशेषणविशेष्यभावोपपत्तौ सकलपदार्थक्षपाचारिणोरभेदान्वयस्य न्याय्यत्वात् । तदाह युज्यत इति ।

यथा वा—

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अपि द्वन्द्वं दिष्टचा तदिह सुभगे संवदति वा-
मतः शेषं यत् स्याज्जितमिह तदानीं गुणितया ॥३३२॥

अत्र यदित्यत्र तदिति, तदानीमित्यत्र यदेति वचनं नास्ति । 'चेत् स्यात्' इति युक्तः पाठः ।

यथा वा—

सङ्ग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत् समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयम् ॥३३३॥

( खण्डप्रशस्तिः )

---

प्रपञ्चयति—यथा वेत्यादि ।

एवमनुभवमात्रगोचरः कथयितुमशक्यं सौन्दर्यं यस्याः । रुचिरता मनोहारिता । कला वैदग्धी । सीमा काष्ठा । युवामेव नान्यः । अपिः सम्भावने । वां युवयोर्दिष्ट्या भाग्येन । शेषं परस्परप्रेमरूपम् । गुणिता गुणः ।

यदित्यत्रेति । यदिति स्यादिति क्रियाया विशेषणम् । यच्छेषभवनं स एव गुणिताया जयः । अत्र स्फुटमेव स्वरूपायोग्यत्वम् । न च न्यूनपदत्वम्, तदःप्रकृतेरुपादानात्, प्रकृतिप्रत्यययोर्द्वयोरनुपादाने तथात्वात् । अत एव न्यूनपदविषयेऽप्यस्य व्यापकत्वमिति दर्शयितुं लक्ष्यान्तरोपादानमिति निरस्तम् । पाठान्तरेण स्वरूपायोग्यत्वमेव निश्चायितम् ।

वाक्ययोरसम्बन्धमाह—सङ्ग्रामेत्यादि । सुखसञ्चारत्वेनाङ्गणत्वम् । समारोपिते सज्जीकृते ।

अत्राकर्णनक्रियायाः कर्मत्वे 'कोदण्डं शरान्' इत्यादि-वाक्यार्थस्य कर्मत्वे 'कोदण्डः शराः' इत्यादि प्राप्तम्। न च यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि। न च केन केने-त्यादिप्रश्नः।

---

अत्रेति। 'आकर्णय' इति क्रियायाः कर्मान्तरानुपादानात् पदार्थस्वरूपाणां वाक्यार्थस्य वा कर्मत्वं क्रमाद् बाधकमाह कोदण्डं शरानिति। तेषां यत्पदार्थत्वेनाकर्णनीयत्वात्। 'कोदण्डः शराः' इति वाक्यार्थकर्मत्वे पदार्था-नामनतिरिक्तत्वेन तेभ्यः प्रथमैव स्यात्।

ननु यच्छब्दानां कोदण्डादिशब्दानामपि कोदण्डादय एवार्थाः। ततश्च 'येन येन' इत्यादिभिः कोदण्डादयो यथा प्रत्यायिताः, कोदण्डेनेत्यादिभिरपि तथैव प्रत्यायितव्या इति कर्तृत्वकर्मत्वप्रतीतये यत्पदेभ्य इव कोदण्डादि-पदेभ्योऽपि तृतीयादयो युक्ता इत्याह--न च यच्छब्दार्थ इति। यदि[1] यच्छब्देभ्यः कोदण्डत्वादिरूपेण कोदण्डादिकर्तृकशरादिकर्मकसाद्दनाव-गमस्तदा कोदण्डेनेत्यादिवैयर्थ्यप्रसङ्गात्। यथा 'घटो घटः' इति। अथ 'यो घटः' इत्यत्र 'घट'पदस्य तात्पर्यग्राहकत्वेन सम्भेदाद् यथा न वैयर्थ्यम्, तथाऽत्रापि स्यादित्याह--तद्विशेषणं वेति। स एव विशेषणं यस्येति विग्रहः। तेन यैरित्यत्र विशेष्यस्याप्रतीतिरिति ग्रन्थस्य न विरोधः। विशेषणविशेष्यभावेनैव सम्भेदः। न च प्रकृते तथा। 'येन शरैर्यच्छरा' इत्यसंगतेः। विशेषण-विशेष्ययोः समानविभक्तिवचनत्वस्यौत्सर्गिकत्वात्।

अथ 'येन येन यद्यत्समासादितम्' इति वाक्यार्थे पर्यवसिते 'केन केन' इत्यादिप्रश्ने कोदण्डाद्यभिधानम् अत आह--न च केन केनेत्यादि। आदि-शब्दात् किं किमित्यस्य परिग्रहः। न च न कथं प्रश्नः, तदसंवेदनात्। न चोत्तरस्यैव प्रश्नोन्नायकता, कोदण्डेनेत्यादेः प्रश्नोत्थापनं विनैव स्वार्थ-पर्यवसानात्। अन्यथा सिद्धस्वार्थपर्यवसान एव[2], तदुन्नायकत्वात्। यथा—

गम्यतामन्यतः पान्थ तवेह वसतिः कुतः।
दोषाय स्यादत्र पान्थ वसतिः प्रोषितालय॥

---

१ यदिपदं दे० ना० लिपौ नास्ति।
२. अन्यथा स्वार्थपर्यवसान एवेति च० पु० पाठः।

यथा वा—

इत्यत्र भो गृहिणि! वासं देहीति याचनं विना 'तवेह वसतिः कुतः' इति प्रतिवचनानुपपत्तेः। प्रकृते तु न तथेति न प्रश्नोन्नयनम्। कोदण्डेनेत्यादेः प्रश्नोन्नायकत्वे च येन येनेत्यादिवैयर्थ्यात्। तस्माद्येन येनेत्यादिना कोदण्डादिव्यतिरिक्तप्रायैः कर्तृकर्मणी प्रतीयेते इति मतयोगाभाव इति दीपिकादयः[1] कुर्वन्तः प्रकाशयन्ति।

तथाहि 'आकर्णय येन येन सहसा यद्यत् समासादितम्' इति सामान्याभिधानस्य केन केनेत्यादिप्रश्नोत्थापकत्वनैयत्येन प्रश्नसंवेदनस्य सार्वलौकिकत्वात्। वस्तुतस्तु कोदण्डेनेत्यादिना कर्तृकर्मणोरेवाभिधानम्, न तु क्रियायाः।

एतच्च क्रियाविनिर्मुक्तकर्तृकर्मगोचरप्रश्ने सत्येव सङ्गच्छते; न च तथा, क्रियासंवलितपूर्ववाक्योत्थापितप्रश्नस्यावश्यकत्वात्। संवलनञ्चार्थं शाब्दं वेति न तत्र ग्रहः। निष्क्रियोत्तरेण च क्रियाकाङ्क्षाया अनिवृत्तेरित्याह—न च केन केनेत्यादि। यदा क्रियां विहाय किमित्यस्य परिग्रहः, समासादितोपादानात्। कोदण्डादिकर्तृकर्मणोः परस्परमनन्वये मतयोगविरहः। न चोपस्थितसमासादनेनान्वयः; तस्य पर्य्यवसितत्वात्।

न च कोदण्डादिकारकपदानां क्रियापदसाकाङ्क्षत्वादावृत्तिः, बहुत्वपुंस्त्वस्त्रीत्वान्वितानां शरादिकर्मपदानां नपुंसकत्वैकत्वान्वितसमासादितक्रियापदं प्रति निराकाङ्क्षत्वात्। आकाङ्क्षाया एवावृत्तिबीजत्वात्। अत एव नपुंसकानपुंसकयोर्नपुंसकमेकवद् वेति सर्वत्रैकत्वनपुंसकत्वाभ्यामन्वय इति निरस्तम्। आवृत्त्यभावेन पदज्ञानाभावात्, पदार्थानुपस्थितावेकरूपेणान्वयविरहात्। अत एवायमेव श्लोको द्वितीयपादपरिवर्तनेन मालादीपके लक्षितः। यथा—

> सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
> संप्राप्ते परिपन्थियोधनिवहे साम्मुख्यमासादितम्।

परार्द्धं समम्।

अत्रापर्यवसितस्यासादनस्य नपुंसकत्वेनैकत्वेन च परत्र परत्रान्वय इति नवीनः पन्थाः। समासादितपदसद्भावाच्च न्यूनपदत्वमपास्तमिति।

---

१. अत्र प्राचीनटीकाकृच्चण्डीदासमताक्षेपः।

'चापाचार्यस्त्रिपुरविजयी' इत्यादि ( २०५ श्लोकः ) ।

अत्र भार्गवस्य निन्दायां तात्पर्यम् । कृतवतेति परशौ सा प्रतीयते ।

'कृतवतः' इति तु पाठे मतयोगो भवति ।

यथा वा—

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।

---

चापाचार्य इति । इयं हि युयुत्सुं भार्गवं प्रति रावणस्योक्तिः ।

अत्र हि रावणस्य भार्गवेण सह युद्धमनभिलषितमिति तदुपेक्षा वाक्यार्थः। स च न प्रतीयते, परशुनिन्दायां भार्गवस्यानुपेक्षणीयत्वापातात् । निन्दितं शस्त्रं परित्यज्यास्त्रान्तरेणापि युद्धसम्भवात् । परशुनिन्दामुखेन भार्गवनिन्दाया अधिकचमत्कारकारित्वमिति तु दुरुक्तिरेव, अस्त्रनिन्दायामप्यस्त्रिणो निन्दितत्वात् । न ह्यस्त्रकुण्ठतायां वीरस्य कुण्ठता, अनेनैव परशुना त्वया मातृवधः कृत इति पौराणिकप्रसिद्ध्या भार्गवेऽपि निन्दा प्रतीयते । एतद्वाक्यात् तदप्रतीतेर्वाक्यस्य भार्गवनिन्दाबोधनस्वरूपायोग्यता यदत्र परशुनिन्दाद्वारा भार्गवनिन्दायां वैचित्र्यावहत्वेन दोषोद्धारं बहु मन्यमानां मतयोगस्येत्यतः पूर्वमकारं श्लेषयन्तः परम्परावाक्यार्थस्यानुपपत्त्या 'कृतवतः' इति पाठे दूषणमामनन्ति, तदपि प्रलपितम्, सर्वत्रैव पाठकल्पनाया दोषोद्धारपरत्वात् । परम्परया निन्दायां निरसितत्वाच्च । कृतवतेत्यत्र परशौ कृतेर्बाधव्यापारलक्षणाव्यापारः पुनः पुनरुद्यमनिपातनक्रियारूपोऽचेतनक्रियायाश्चेतनकृत्यधीनत्वेन भार्गवस्तवकृतिप्रतीत्युत्तरकालमेव परशुप्रतीतिरिति न परशुनिन्दामुखेन भार्गवनिन्देति यदत्र नव्योक्तिः सा चिन्त्या, तदुक्तप्रकारस्यैव निन्दामुखनिन्दारूपत्वाद् व्यापारलक्षणयैव वाच्यार्थोपपत्तौ स्तवनकृतिज्ञानस्यावश्यानपेक्षणीयत्वाच्च । अन्यथा 'रथो गच्छति' इत्यत्रापि तदपेक्षाप्रसङ्गात् । धीरोद्धतस्य रावणस्य व्याजनिन्दा न विवक्षितवाक्यार्थ इति कस्यचिदुक्तिः प्रकृतिविपर्ययपर्यवसायित्वेनोपेक्षणीयत्वमेक । कृतवत इति पाठ इति तदैवोपेक्षावगमात् ।

चत्वार इति । भीमार्जुननकुलसहदेवाश्चत्वारः । स इति यद्बधाय तैर्यत्नः

कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः ।।३३४।।

अत्र 'अध्वर'शब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते ।

तथा--

'जङ्घाकाण्डोरुनाल' इत्यादि (२५४ श्लोकः) ।

अत्र दण्डपादगता निजतनुः प्रतीयते, भवानीसम्बन्धिनी तु विवक्षिता ।

अनभिहितवाच्यमवश्यवक्तव्यमनुक्तं यत्र । यथा--

अप्राकृतस्य चरितातिशयैश्च दृष्टै-
रत्यद्भुतैर्मम[1] हृतस्य तथापि नास्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
[2]माहात्म्यसारसमुदायमयः पदार्थः ।।३३५।।
( वीरच० २।३६ )

---

कृतः, दीक्षितो गृहीतनियमः । हतो दुन्दुभिः स्फीतं स्निग्धं रसति, ताडनेऽपि स्निग्धशब्दोदयाज्जयसूचनम् ।

अत्रेत्यादि । गुणीभूतः, विशेषणत्वेनैकविशेष्यावरुद्धस्य सम्बन्धिकेतर-विशेषणस्य विशेष्यान्तरनिराकाङ्क्षत्वात् ।

विधेयाविमर्षे तु प्राधान्येनाप्रतीतस्य विधेयांशस्यैव दुष्टता, अत्र तु तदनन्वितानामन्येषां विवक्षितवाक्यार्थबोधकत्वमिति ततो भेदः ।

अत्रेत्यादि । इष्टापत्तिं परिहरति--भवानीत्यादि । निजस्वार्थादिशब्दानां प्रधानक्रियान्वयान्वयित्वव्युत्पत्तेर्न भवानीगतान्वयावगतिः ।

अवश्येति । तेन न्यूनपदेन प्रसङ्गः । तत्र हि तथाभूतेत्यादावस्मदर्थाध्याहारेणाप्यन्वयोपपत्तेः । यत्र तु शब्दस्यावश्यकता तत्रायं दोषः । यथोदाहरिष्यमाणे अप्यादौ अप्यादिसत्त्वेनैव समुच्चयादिप्रतीतिः । तदर्थानामध्याहारासम्भवादिति वक्ष्यते । एवञ्च पुष्पेभ्य इत्यत्र 'स्पृहयति' पदानुपादाने तु सङ्कर एव ।

अप्राकृतस्येत्यादि । अप्राकृतस्य यत्किञ्चित् कौतुकानाकृष्टस्यापहृतस्य

---

१. रपहृतस्येति प्रायः पाठः । २. सौन्दर्यसार इति सार्वत्रिकः पाठः ।

अत्र 'अपहृतोऽस्मि' इत्यपहृतत्वस्य विधिर्वाच्यः, तथापीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः।

यथा वा--

एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्त्ती।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूप-
लक्ष्मीफलामसुरराजसुतां विधाय ॥३३६॥

( उषा० ना० )

अत्र मनोरथानामपि दूरवर्तीत्यर्थो वाच्यः।

---

वशीकृतस्य अप्रमेयोऽन्यत्राहृष्टः। माहात्म्यं प्रभावातिशयः। विशेषानिश्चयाभावे पदार्थतोक्तिः।

अत्रेत्यादि। अस्मीत्यहमर्थे, अप्राकृतस्येत्यत्र च प्रथमैकवचनोपादानमावश्यकम्। तत एव विधेयतावगमः। तदनुपादानादनभिहितवाच्यता।

ननु विधेयत्वावचनेन विधेयाविमर्षकत्वमेवेत्याह—तथापीत्यस्येति। अत्र ह तदप्रक्रान्तवाचित्वं प्रक्रान्तत्वं वा पूर्वप्रतीतत्वमित्येकवाक्यतयाऽन्वये तदभावः स्फुट एव। तेनापहारस्य विधेयत्वाभानात् तथापीत्यस्य प्रकृतवाक्यार्थाप्रतिपादने वा न दोषपार्थक्यं वक्तव्यमेवेति भावः।

प्रथमयोः प्रत्ययमात्रस्यानुपादानान्न न्यूनपदता। न वापकृतस्येति पदस्य तथाऽपिना सहान्वयबोधाक्षमतया अभवन्मतयोगतेति वाच्यम्, विशेषणविशेष्यभावादिसंबन्धानुपपत्त्या पदानां वाक्यार्थप्रत्यायन एवाभवन्मतयोगत्वात्। संज्ञाया यौगिकत्वात्। अत्र तु मम नाथेति सत्यपि भेदसम्बन्धे वाक्यस्य भेदाभावादेव तथापीत्यस्य वाक्यार्थावबोधकतेति प्रयोजकभेदेनैव भेदात्, अत एवात्र भिन्नवाक्यगतत्वेनैवेत्युक्तम्।

विधेयाविमर्शसङ्कीर्णमुदाहरति--एषोऽहमिति। अद्रितनया पार्वती। अपूर्वपदाज्ञानत्वेनापूर्वविधित्वम्। अत एव सुरासुरदाम्पत्यघटनं पुरातनविधौ तदहृष्टेः। अनिरुद्धेन सह घटनया प्राप्तं सौन्दर्यसम्पत्तिफलं यया, एवं निर्माय्याहं प्राप्त इत्यन्वयः।

अप्यर्थो वाच्य इत्यप्यर्थः समुच्चयः, न केवलं बहिरिन्द्रियाणामपि इत्येवंरूपः। स चापरानुपादानान्नोपपन्नस्तदाह—मनोरथानामपीति।

यथा वा--

त्वयि निबद्धरतेः प्रियवादिनः
प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि
त्यजसि मानिनि दासजनं यतः ।। ३३७ ।।
( विक्रमो० )

अत्रापराधस्य लवमपीति वाच्यम् ।

अस्थानस्थपदं यथा--

---

त्वयीत्यादि। निबद्धा निगडिता। प्रणयेत्यादिना मनसोऽपि तदेकतानत्वसूचनमपराधस्य लवमित्यादि। तत एव दासपरित्यागः। लवालवदर्शनस्य त्यागान्वयप्रयोजकरूपस्यानुपादानाद् योग्यतानुपपत्तिः। लवपदस्य सद्भावाच्च न न्यूनपदता, अजहत्स्वार्थलक्षणया तस्यैव लवालवोभयबोधकत्वादपेस्तात्पर्यग्राहकत्वाद्, अन्यतरत्वस्य लक्ष्यतावच्छेदकत्वात्। न चापिना तदभिधानम् समुच्चयानन्त्येनानन्तशक्तिकल्पनाप्रसङ्गात्। एवमेव सर्वत्र समुच्चये ध्येयम्। एवकारेऽप्येवमेव वक्ष्यामः।

अप्यादीनां निपातत्वेन स्वतन्त्रप्रयोगविरहान्न पदत्वमिति मिश्रादिभिर्यदुक्तम्, तन्न युक्तम्; निरर्थके पददोषे चादीनां तैरेव पदत्वाभ्युपगमात्।

केचित्तु तत्रापराधे लवो न विवक्षितः, किन्तु महानेव इत्यत्राविवक्षितबोधकता इति प्रलपन्ति, तन्न, लवालवेन तस्यापि विवक्षितत्वात्। एषोऽहमित्यादावव्याप्तेश्च। तत्र विवक्षितस्यैवाबोधकत्वादिदं पुनरिहावधेयम्।

अभवन्मतयोगसङ्करेऽपि उपजीव्यत्वेनानभिहितत्ववाच्यस्य पृथग् दोषत्वमिति।

यथास्थितविवक्षितस्वार्थानुभावकत्वे सति स्वसाकाङ्क्षस्थानाद् व्यवहितस्थानप्रयुक्तत्वपदस्य पदत्वम्। यथास्थितिस्तयैवानुपूर्व्या तेन सङ्कीर्णगर्भिताक्रमेषु न प्रसङ्गः। तेषु तयानुपूर्व्या विवक्षिताननुभावकत्वात्। अत्र तु न तथेति वक्ष्यामः। स्थानपदेन पदपदं व्याख्यातम्।

प्रियेण संग्रथ्य विपक्षसन्निधा-
वुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद् विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुषु ।।३३८।।
( किराता० )

अत्र काचिन्न विजहाविति वाच्यम् ।

यथा वा--

---

प्रियेणेत्यादि । संग्रथ्य सम्यग् निर्माय विपक्षः सपत्नीवक्षस्यर्पणे हेतुः पीवरस्तनत्वम् । जलाविलामित्यत्रापिर्वाच्यः । प्रेम्णि सति वस्तुनि गुणा उत्कर्षाः, न तु वस्तुमात्रे ।

न विजहाविलीति । अत्रासमस्तस्य नञः क्रियान्वयित्वतात्पर्यग्रहे क्रियाकाङ्क्षायामन्तरा काचिदित्यर्थेऽपि स्थितौ क्रियाया अलाभे न तस्य गमनम्, अनन्तरञ्च क्रियोपस्थितावयोग्यकारकपरिहरणतया सह अस्थानस्थितस्य नञो विलम्बेनान्वयः । क्रियासान्निध्ये तु नैवमित्याह—काचिन्न विजहाविलीति । यथा श्रुतादानुपूर्व्यन्तराकल्पनान्न क्लिष्टत्वम् । वस्तुतस्तु क्लिष्टे आकाङ्क्षासत्त्वेन तात्पर्यान्यतरविलम्बप्रयुक्तान्वयबोधविलम्बकत्वं दूषकताबीजम् । अत्रासत्तिविलम्बमात्रप्रयुक्तमिति ततो भेदः । लक्षणमपि स्थानविशेषाविशेषितासत्तिमात्रविलम्बप्रयुक्तप्रत्ययविलम्बवत्त्वं पूर्वविशेषणाद्दर्धान्तरैकवाचकाक्रमयोर्व्युदासः । दोषस्तु नञः क्रियायोगविलम्बेनाभावानुभावकत्वविलम्ब इत्यासत्तिवैगुण्यम् ।

न च 'नवजलधर' इत्यादावपि नामसान्निध्येऽपि असमस्तस्य नञोऽभावप्रत्यायने विलम्ब इति वाच्यम्, तत्रापि गम्यमानभवतिक्रियासान्निध्यात्, अत्र तु क्रियोपादानेनाध्याहाराभावात् ।

क्रियासान्निध्यमात्रेणैव नञोऽभावानुभावकत्वम्, न तु पूर्वापरत्वनियमेनेत्यक्रमादभेदः, तत्र तु क्रियोपादानेनाध्याहाराभावाद् वाचकपदास्थानपातित्यमुदाहरति—यथा वेति ।

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥३३९॥

अत्र नखलक्ष्मेत्यतः पूर्वं कुटिलाताम्र इति वाच्यम् ।

अस्थानस्थसमासं यथा—

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥३४०॥

अत्र क्रुद्धस्योक्तौ समासो न कृतः, कवेरुक्तौ तु कृतः ।

---

शितिकन्धरः शिवस्तदिन्दुशकलेनान्तःकपोलस्थलं प्राप्तः । अर्थात् पार्वत्या मुद्राङ्कः पातु, यः अन्यसम्पर्कादन्यः समुदितचिह्नो मुद्राङ्कः नखलक्ष्म । शङ्कायां हेतुः—कुटिलेत्यादि । तत एव नखक्षताकारता । पूर्वमित्यादि । तत एव हेतुहेतुमद्भावेन झटित्यन्वयः स्यात् । यथाश्रुते तु पूर्ववदयोग्यपरिहारादिविलम्ब इत्यवधेयम् ।

स्थानभ्रष्टसमासवद् वाक्यमपदस्थसमासम् । समासोद्देश्योद्देश्यकं वाक्यं स्थानम् । तदितरदस्थानम् ।

अद्याप्यसान्निध्ये । कोशः खड्गपिधानम् । कोपितचन्द्रस्योक्तौ वचसि धिगित्यन्ते । तत्परा कवेरुक्तिरिति विवृण्वता ग्रन्थकृता स्थानत्यागेनास्थानगामित्वेनायं दोष इति सूचितम् । तेन शृङ्गाररसप्रधानके पद्ये दीर्घसमासत्वं न दोषः । किन्तु प्रतिकूलवर्णत्वमेव, स्थानपरित्यागाभावात् । सत्येव स्थाने तत्परित्यागात् । किञ्च, दीर्घसमासे वीररसे वाच्येऽपि न प्रसङ्गः, तत्र स्थानकृतत्वाभावात् । अस्थानासंभवात् स्थानेऽस्थाने च कृते समासे नायं दोषः, स्थानपरिहाराभावादिति मिश्रोक्तिर्मिश्रोक्तिरेव । अस्थानकृतस्य समासस्य स्थानगामित्वाभावाद्दोषान्तरापातप्रसङ्गाच्च । न च तत्र कवेरनौचित्यमेव, तस्य दोषाप्रयोजकत्वात् । अन्यथा सर्वत्रैव तस्य सुवचत्वेन दोषनिरुक्त्यप्रसङ्गात् । तत्र दीर्घसमासव्यङ्ग्यमोजोगुणं प्रति काव्यस्य कविनिराकाङ्क्षितत्वमिति दोषः ।

संकीर्णं यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति । यथा--

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥३४१॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण, मनसस्तमोरूपं कोपं मुञ्चेति। एकवाक्यतायां तु क्लिष्टमिति भेदः ।

गर्भितं यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति । यथा–

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥३४२॥

अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः ।

यथा वा--

---

वाक्यान्तरपदसमभिव्याहृतं वाक्यं सङ्कीर्णं वाक्यान्तरख्यातक्रियासमाप्यम्, तेन क्लिष्टेन प्रसङ्गः । तत्र धम्मिलस्य शोभां प्रेक्ष्येत्यङ्गाङ्गीभावापन्नानां वाक्यानाम् आख्यातक्रियासमाप्यताविरहादित्येवोक्तमेकवाक्यतायामित्यादिना, अन्यथा तत्राप्यङ्गाङ्गिभावेनैकवाक्यत्वसम्भवात् । वाक्यान्तरं क्रियान्तरान्वितम् । तेनैकक्रियान्तरान्विते 'घटमानय पटञ्च' इत्यत्र पटान्वितानयनपदसङ्करेऽपि क्रियैक्यान्न प्रसङ्गः । एकवाक्यत्वेन क्लिष्टे आसत्तिज्ञानं विलम्बेन भवति, सङ्कीर्णे तु भिन्नवाक्यत्वेन ।

विलम्बेनापि नासत्तिज्ञानमिति यन्मिश्रेणोक्तं तन्न, विमर्षोत्पन्नस्यासत्तिज्ञानमस्यैकवाक्य इव भिन्नवाक्येऽपि सम्मतत्वात् । अन्यथा 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यत्र सर्वथैवानासत्तावासत्तिदशायामन्वयबोधकस्य सर्वादिसम्मतस्यापलापप्रसङ्गादिति ।

स्वमध्यपतितवाक्यान्तरैकत्वं गर्भितत्वम् ।

परापकारेत्यादि । निरतैस्तदेकव्रतैः । अत्र व्यवधायकस्य स्वार्थानुभावकत्वं सङ्कीर्णे न तथेति भेदः । एतेन बीजफलसाम्येऽपि सङ्कीर्णगर्भितस्य पृथगुपादानम् । क्वचित्तु गुणत्वाभिधानायेति मिश्रमतमपास्तम्, फलपार्थक्यस्य दर्शितत्वात् ।

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्टयारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद् गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥

अत्र 'विदितं तेऽस्तु' इत्येतत्कृतम् । प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकृत् ।

मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥

इति प्रसिद्धिमतिक्रान्तम् । यथा—

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।

---

अवान्तरवाक्यभेदेऽपि गर्भितमाह—लग्नमित्यादि । रागोऽनुरागो रुधिरो रक्तिमा च । मातङ्गाश्चण्डाला दन्तिनश्च । परे उदासीनाः शत्रवश्च । तस्याम् असियष्ट्यां शक्तोऽनुरक्तश्च । गणयति युक्तायुक्तं विचारयति । किं वा अहं भृत्येभ्यो दत्ता इति विदितं ते इति श्रीनियोगादिति गदितुमिवाम्बुधिं गता यस्य कीर्तिरित्यन्वयः ।

अत्रेत्यादि । विदितं तेऽस्त्वित्यनेन गर्भितमिति योजनम् । तेनाऽस्मीत्याद्यर्थस्यापि वेदनीयत्वं विवक्षितम् । विदितमित्यादेर्मध्यानुप्रवेशे तथाप्रतीतिरत्रापि अनासक्तिः । न केवलं विवक्षिताप्रतिपत्तिरविवक्षितप्रतिपत्तिरपि, तदाह—प्रत्युतेत्यादि । प्रथमवेदनया वेदयितव्याऽनुचितार्थाभिधाने क्रोधाभिव्यक्तेः । विरुद्धेत्यादि । प्रकाशितविरुद्धमित्यर्थः ।

प्रसिद्धादन्यत्र प्रयोगः प्रसिद्धिहतः । तत्र किं कुत्र प्रसिद्धमित्याह—मञ्जीरादिष्विति । प्रायशब्देन शिञ्जितादेः, प्रभृतिशब्देन नादादेः, आदिशब्देन मन्मथादेः, प्रमुखेन च रसितादेः परिग्रहः । नाप्रयुक्तत्वम्, सर्वथा प्रयोगविरहाभावात् ।

महाप्रलय इत्यादि । महत्पदं मारुतेनान्वितम्, न तु प्रलयेन, सर्वमुक्तेरेव तत्त्वात् । पुष्करावर्तो मेघः 'गर्जितादपि प्रतिगर्जितमुभयसंवलनाद् बलीयः'

रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥३४४॥
( वेणी० सं० )

अत्र रवो मण्डूकादिषु प्रसिद्धः, न तूक्तविशेषे सिंहनादे।

भग्नः प्रक्रमः प्रस्तावो यत्र । यथा—

नाथे निशाया नियतेर्नियोगादस्तंगते हन्त निशाऽपि याता।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति ॥३४५॥

अत्र 'गते' इति प्रक्रान्ते 'याता' इति प्रकृतेः। 'गता निशाऽपि' इति तु युक्तम् ।

ननु 'नैकं पदं द्विः प्रयोज्यं प्रायेण' इत्यन्यत्र कथितपदं दुष्टमिति चेहैवोक्तम्; तत्कथमेकस्य पदस्य द्विः प्रयोगः? उच्यते—उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदप्रयोग-

---

अत एव तस्योपमानता। द्यावापृथिव्यौ रोदसी। प्रलयसमये घनगर्जितस्याष्टौ प्रतिध्वनिरिति समरस्योदधित्वनिरूपणम् । मण्डूकेत्यादिपदात् सकलमृदुलध्वनिकजन्तुपरिग्रहः ।

इष्टापत्तिं परिहरति—न त्विति । सिंहनादे हेतुमाह—उक्तविशेष इति । श्रवणभैरवत्वरोदसीस्थगनविशेषणमर्यादया तल्लाभः । विषयेति पाठे उक्तस्य श्रवणभैरवत्वादेर्विषयोऽधिकरणम् । विशेष इति पाठे वैशिष्ट्यमर्थः ।

उपसर्गादीनां कारणं विना वाक्यान्तरे पदपरिहारः क्रमभङ्गः ।

नाथे निशाया इत्यादि। नियतिर्नियमोऽदृष्टश्च। कुलाङ्गनानां भर्तृसमानदशैवोचितेत्यन्वयः ।

प्रकृतेर्वानुरूपायाः प्रक्रमो भग्न इत्यर्थः । एवमुत्तरत्रापि ।

पाठान्तरे बाधितपदत्वमाशङ्कते—नन्विति । अन्यत्र वामनोक्तौ । उद्देश्यः प्राक् प्रत्यायितः, प्रतिनिर्देश्यः पुनः प्रत्याय्यः । प्रकृतेऽभेदज्ञापनया पुनरुक्तस्यैवोत्कर्षकत्वमिति न दोषः । एवमर्थान्तरसङ्क्रमितवाच्यलाटानुप्रासयोरपि । तद्वति उद्देश्यप्रतिनिर्देश्यवति प्रत्युत विरोधे

निषेधस्य तद्वति विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः ।

तथा हि—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ।।३४६।।

अत्र रक्त एवास्तमेतीति यदि क्रियेत, तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति ।

---

तस्यैव प्रागुक्तस्य सर्वनाम्नस्तददसादेः । तेन रूपेण तेषामपि बोधकत्वात् । तेन "भातीन्दुस्तस्य चेन्दोः करनिकर०" इत्यत्र पौनरुक्त्यमेव, तत्पदेनैवेन्दोः परामर्शसम्भवात् । "स स्थाणुः स्थिरभक्तियोगसुलभः" इत्यत्र न पौनरुक्त्यम्, स्थाणुपदानुपादाने तच्छब्दार्थपरिच्छेदासम्भवात् । वेति विकल्पो व्यवस्थामाह । स चेद् यत्राभेदः सर्वनामगम्यस्तत्र पुनः प्रयोगे कथितपदत्वमेव । तत्प्रयोजनस्यान्यतः सिद्धे सर्वस्य लभ्याभेदप्रतिपादनाय तु पुनः प्रयोग इत्येवंरूपा । यथा—उदेति सवितेत्यादौ ।

अत्र स एवेति कृते प्रधानस्य सवितुरेव परामर्शः स्यात् । तथेति कृते च ताम्र उदेति । ताम्रत्वेनास्तं यातीत्यत्र प्रकारे भानेनाभेदप्रत्यभिज्ञानं स्यात् । 'निशि तामन्तिकस्थामपि सहचरीं न विलोकयति चक्राङ्गः । चक्राङ्ग्यपि न सहचरमहो दुर्लङ्घ्यता नियतेः ।।' इत्यत्र पौनरुक्त्यमेव । विरहविधुरा साऽपि, तामिति कृते चक्राङ्गसहचरीपरामर्शसम्भवात् । "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये" इत्यत्रानयोरिति कृते प्रकृतत्वेन प्रधानस्योपमेयस्यैव परामर्शः स्यात्, न तूपमानयोर्वागर्थयोः । नहि 'देवदत्त इव पण्डितस्तं पश्य' इत्यत्र तत्पदेन देवदत्तप्रत्यायनम् । एतेन लौकिकवैदिकशब्दार्थौ उपमाने । आशास्यमानौ च लौकिकवैदिकावेव शब्दार्थौ काव्यरूपाविति नाभेदः प्रतिपाद्य इति मिश्रोक्तं निरस्तम्, उक्तरीत्योपमानपरामर्शासम्भवात् । सर्वेषामेव शब्दार्थानामुपमानत्वे आशास्यमानत्वेनाक्षतेः । निखिलशब्दार्थ एव काव्यनिष्पत्तेः । तेन सर्वनामप्रयोगाविषयाभेदप्रतिपादनाय पुनः प्रयोग इति व्यवस्थितो विकल्पः ।

युक्तिद्वारोपपादयति—तथा हीति ।

ताम्र एवेति । एवकारोऽयोगव्यवच्छेदकः ।

यथा वा—

यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसङ्ख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ।। ३४७ ।।

अत्र प्रत्ययस्य । 'सुखमीहितुं वा' इति युक्तः पाठः ।

---

अर्थान्तरतयैवेति । आपाततस्तथाप्रतिपत्तेः स्थगयति नैकरूप्यमासादयति । तथैवेति पाठे आपातत इति शेषः । अन्यथा प्रतीतावेव स्थगनशब्दप्रयोगः ।

ननु पर्यायशब्दानां शक्यतावच्छेदकैक्यनियमात् कथमन्यत्वेन प्रतीतिः ? अत्र नव्याः 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याकारकशक्तिग्रहविषयत्वाच्छब्दस्य विशेषेणादिपदार्थवत्पदस्याप्युपस्थितिः । पदान्तरोपादाने च तदुपस्थित्या प्रतीत्यन्यथात्वं स्फुटमेव । तदुक्तम्—'न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते' इति तच्चिन्त्यम् । पदज्ञानात् सम्बन्धिनः पदार्थस्योपस्थितेः, न तु पदस्यातिप्रसङ्गात् ।

यत्तु अर्थभेदाच्छब्दभेदवच्छब्दभेदादप्यर्थभेद इति शब्दान्तरोपादानेऽर्थस्य नित्यताप्रतीतिरिति मिश्रैरुक्तम्, तन्न युक्तम्, तदा घटः कलश इत्यत्राप्यपौनरुक्त्यप्रसङ्गात् । अर्थस्य वास्तविके भेदे स एवार्थोऽर्थान्तरतयेवेति ग्रन्थविरोधाच्च ।

यच्च पदभेदे व्युत्पत्तिनिमित्तभेदाद् भिन्नताप्रतीतिरिति सान्धिविग्रहिकेणोक्तं तदप्यसत्, उक्तौ न तत्प्रतीतिभास इति । आदौ धातुभेदेऽव्याप्तेः । नास्त्येव तत्र व्युत्पत्तिः । वस्तुतस्ताम्रपदेन रक्तत्वेन सर्वमेवोपस्थाप्य तेषामयोग्यतया तेन रूपेण सवितैवानुभावितः । तद्गोचरसंस्कारजनितं पुनस्ताम्रपदं श्रूयमाणमुद्बुद्धेन तत्संस्कारेणाहृत्य सवितारमेवोपस्थापयत्यनुभावयति च । न चैवं रक्तादिपदेषु सामान्यस्मरणे इतरबाधादिसहकारेणैव तेषां सवितृबोधकत्वादिति प्रतीतिमान्थर्यम्, तेनार्थान्तरतयेवेत्यपि सङ्गच्छत इति । अत एव पुनस्ताम्रपदोपादाने विशेष्यस्य सवितुः पुनः पुनरनुपादानम्, तेन तस्यैवोपस्थितेः ।

यश इत्यादि । उत्सुकमौत्सुक्यम्, तुम्-सनोरिच्छया समानार्थत्वेऽपि तुमा फलत्वप्रतीतिः, न तु सन्येकरूपताहानिः ।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ।।३४८।।
( कुमा० सं० ६।९४ )

अत्र सर्वनाम्नः । 'अनेन विसृष्टाः' इति तु वाच्यम् ।

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ।।३४९।।
( कुमा० सं० १।२७ )

अत्र पर्यायस्य । 'महीभृतोऽपत्यवतोऽपि' इति युक्तम् । अत्र सत्यपि पुत्रे कन्यारूपेऽप्यपत्ये स्नेहोऽभूदिति केचित् समर्थयन्ते ।

---

ते हिमालयेत्यादि । तदिदमोः सर्वनामत्वाविशेषेऽपि पूर्वानुभूतपुरोवर्तिविषयत्वान्नैकरूपता ।

महीभृत इत्यादि । तस्मिन् कन्यारूपे तृप्तिरिच्छारूपः ।

पर्यायस्येति । अथ कथमपत्यपुत्रयोः पर्यायता ? जन्यप्राणित्वेन जन्यपुंस्त्वेन च शक्यतावच्छेदकभेदात् । अत्र केचित् पुत्रश्च दुहिता चेत्येकशेषेण पुत्रपदस्य कन्यापुत्रोभयबोधकतया अपत्यपर्यायतेत्याहुः, तन्न, जन्यप्राणित्वस्य जन्यस्त्रीपुंस्त्वाभ्यामन्यत्वेन प्रकरणभेदादपर्यायत्वात् । न च विषयमात्रैक्येनात्र पर्यायता, षण्डस्यापत्यत्वेन तदैक्यविरहात् । न च षण्डेषु नापत्यता, तेषां संतत्यनारम्भकत्वेन पतति वंशो येन तत् पत्यम्, न पत्यमपत्यमिति व्युत्पत्तिविरहादिति वाच्यम्, तेष्वपि प्रयोगेणाजन्मानूढतार्थस्यापत्यत्वेन च व्युत्पत्तेरप्रयोजकत्वात् । घटो द्रव्यमित्यत्रापि पर्यायतापाताच्च । तत्रापि विषयैक्यानपायात् । मिश्रास्तु—

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥

इत्यनुशासनात् पुत्रपदस्य सुतकन्योभयवाचित्वेन पुत्रापत्ययोः पर्यायत्वं वदन्ति, तदपि विरुद्धम्, प्रकारभेदे पर्यायत्वस्य पूर्वोक्तदोषग्रासात् । अपत्यशब्दवत् पुत्रशब्दादपि कन्यापुत्रसन्देहप्रसङ्गाच्च । अनुशासनस्य पुत्रादिपदानां निरूढलक्षणया कन्याभिधानेनैवोपपत्तेः । स्त्रीप्रत्ययस्यैव लक्षणतात्पर्यग्राहकत्वात् । अत एव नानार्थे तदाश्रयणम् । अन्यथा मातामहपितामहाभ्यां स्त्रीप्रत्ययानुशासनात् तयोरपि पित्रोर्मातृपितृवाचित्वं स्यादित्यलं

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥३५०॥

अत्रोपसर्गस्य पर्यायस्य च । 'तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिर्लघुतावान्न पदं नृपश्रियः ॥'इति युक्तम् ।

काचित् कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत् कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यः शशंसुः॥ ३५१॥

---

प्रतिष्ठितवचोविचारेण । वस्तुतस्तु यत्सामान्यसत्ता तद्विशेषगोचरेच्छेति हि प्रस्तावः । पुष्पसामान्यसत्तायां पुष्पविशेषादरबोधकदृष्टान्तेन तथैव प्रत्यायनात्, विरोधार्थकापिशब्दस्वरसाच्च । ततश्चापत्यसत्तायामपत्यविशेषे स्नेह इति प्रस्तावः । पुत्रपदस्थानेऽपत्यशब्दानुपादानाद् विघटितः । अत एव पर्यायस्येति, न तु पर्यायेणेत्युक्तमिति !

कथं पुत्रपदस्यापत्यपर्यायताविचारः ? नन्वारभ्यमाणस्य वर्त्मनोऽन्येन भङ्ग एव प्रक्रमभङ्गः । अत्र त्वारम्भकेणैव पुत्रपदेनेति चेत्, औचित्यार्जित-प्रस्तावान्यथाभाव एवास्य विषयत्वात्, विघटकपौर्वापर्यस्यानियमात् । अत एव प्रक्रमपदस्य प्रस्तावोऽर्थो विवृतः । अत एव च पाठान्तरे पुत्रपदस्थान एवापत्यपदप्रक्षेप इत्याह—अपत्यवतोऽपीत्यादि । अत्र सत्यपीत्यादि केचित्, न वयम्, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यापातात् । विशेष्यविशेषणभावविषयत्वेन सामान्यविशेषभावेन च भिन्नविषयत्वप्रसङ्गात् ।

विपद इत्यादि । आयतिरुत्तरकालशुद्धिः । उपसर्गस्याङः पर्यायस्य लघुत्वबोधकलघुतास्वरूपपदान्तरस्य प्रस्तावो गरीयःपदेन भग्न इति नेयम्, अन्यथा लघुता-गरीयःपदयोरर्थभेदादपर्यायत्वादसङ्गतिः स्यात् । अत एव शोधकपाठे लघुतापदावृत्तिः । तदिति शोधकमात्रं न पाठकल्पकम्, छन्दोभङ्गापातात् ।

काचिदित्यादि । रजांसि स्त्रीधर्मः, पांसवश्च । दाहस्तापो हेतु-लक्षणया वह्निश्च । सत्त्वं प्रथमगुणः प्राणी च । पार्थिवानां नायकद्विषां प्रस्थाने यात्रायां भाव्यशिवम् । नार्यः शशंसुरित्यन्वयः ।

अत्र वचनस्य । 'काश्चित् कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीकाः' इति, 'कम्पमानाः' इत्यत्र 'कम्पमापुः' इति च पठनीयम् ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम् ।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥३५२॥

अत्र कारकस्य । 'विश्रब्धा रचयन्तु सूकरवरा मुस्ताक्षतिम्' इत्यदुष्टम् ।

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिगच्छति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात् पाणिः पादोपसङ्ग्रहणाय च ॥३५३॥

अत्र क्रमस्य । पादोपसङ्ग्रहणायेति पूर्वं वाच्यम् ।

---

वचनस्य बहुत्वादिप्रतिपादकस्य । आख्यातक्रमभङ्गमपि व्याचष्टे । पाठान्तरेण---कम्पमापुरिति ।

गाहन्तामित्यादि । शृङ्गैर्जलताडनं स्वभावोक्तिः ।

अत्र कारकस्येति । अभिहितानभिहितभेदेन । यद्वा कारकस्य कारकविभक्तेः । वस्तुतस्तु सर्वत्रैव कर्तृविशेष्यत्वप्रस्तावः । विश्रब्धैरित्यादिना कर्मविशेष्यताप्रतिपादकेन तदन्यथाकरणमित्यर्थः ।

अकलितेत्यादि । अकलितमपरिमितं यशोनिधौ प्रतिष्ठिते, तज्जयादुत्कर्षाधिक्यम् । अवितथो यथार्थो मदोऽहङ्कारः । आध्माते सिंहवच्छब्दायमाने । क्रमस्येति । तपसः प्रथमोपन्यासेन तदुपयोगिपादग्रहणस्यापि तथौचित्यात् ।

एवमन्यदप्यनुसर्तव्यम् ।

अविद्यमानः क्रमो यत्र । यथा——

द्वयं गतं सम्प्रति शोचनीयतां
　　समागमप्रार्थनया　कपालिनः ।
कला च सा कान्तिमती कलावत-
　　स्त्वमस्य लोकस्य च नेत्रकौमुदी ।। ३५४ ।।

अत्र त्वंशब्दानन्तरं चकारो युक्तः ।

यथा वा——

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुरः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ।। ३५५ ।।

अत्र 'इत्थं प्रोच्येव' इति वाच्यम् ।

---

एवमित्यादि । यथा—शशी दिवसधूसर इत्यादौ शोभनत्वेन प्रतीतस्याशोभनत्वं शक्यमिति विवक्षितः क्रमः । तस्य द्वितीयचतुर्थषष्ठवाक्येष्वन्यथात्वेन भङ्गः ।

यस्य यदव्यवहितपूर्वत्वनियमेन यदव्यवहितपरत्वनियमेन विवक्षितार्थानुभावकत्वम्, तस्य तत्परिहारेणान्यत्र स्थितिरक्रमः । त्वंशब्दानन्तरमिति । तदैव तस्याः समुच्चयता स्यादस्थानपदाद् भेदश्च । तत्प्रसङ्गेनैव व्याख्यातः । यद्यपि चादीनां स्वातन्त्र्येणार्थप्रत्यायकताविरहेण च पदत्वाभावात् तद्घटितानामवाक्यतया तदवलम्बिनां न वाक्यदोषत्वम्, तथापि त्वमित्यनन्तरं चकारोपादानात् कलेति त्वमिति पदयोरपि शोचनीयत्वक्रियासाहित्यान्वयबोधकत्वेन वाक्यदोषतेत्यवधेयम् ।

शक्तिरित्यादि । निस्त्रिंशः खड्गः खलश्च । दोषाकरो मूर्खत्वाद्याश्रयः, दोषाया रात्रेः कारकश्चन्द्रश्च । कुट्टनी छेदिका गणिका च । सर्वगा सर्वजनग्राह्या सर्वगामिनी च । वृद्धया बहलया जरत्या च ।

इत्थं प्रोच्येत्यादि । तदेव तत्तु अरूपस्याभिधेयत्वावगमः ।

तथा—

'लग्नं रागावृताङ्ग्या' इत्यादौ 'तु' इति 'श्रीनियोगात्' इति वाच्यम् ।

अमतः प्रकृतविरुद्धः परार्थो यत्र । यथा—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ।।३५६।।

अत्र प्रकृतरसविरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ।

अर्थदोषानाह—

**अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ।। ५५ ।।**
**सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।**
**अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ।।५६।।**
**साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।**
**विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ।। ५७ ।।**

दुष्ट इति सम्बध्यते ।

---

तथेत्यादि । तत एव तत्तत्स्वरूपत्वं श्रीनियोगस्य प्रतिपन्नं स्यात् ।

विवक्षितासंबद्धा । अविवक्षितार्थप्रत्यायकेयममतपरार्थता ।

रामेत्यादि । मन्मथो मनोमथनहेतुः कामश्च । निशाचरी राक्षसी अभिसारिका च । जीवितेशो यमः कान्तश्च ।

अत्र घातके रामे कामत्वस्य, मृतायां राक्षस्यामभिसारिकात्वस्य, शोणिते कुङ्कुमत्वस्य, जीवनाशके यमे कान्तत्वस्यारोपो विरुद्धः ।

द्वयोर्विरुद्धरसव्यञ्जकत्वादित्याह—प्रकृतरसविरुद्धेत्यादि । प्रकृतरसो वीभत्सः ।

इदानीमर्थदोषाः प्राप्तावसरा इत्याह—अर्थदोषानाहेति । पोषणं पुष्टमुपकारः । पश्चान्नञा बहुव्रीहिः । प्रकृतवाक्यार्थस्वरूपोत्कर्षाहेतुरपुष्टः ।

क्रमेणोदाहरणम्—

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद् रविर्जयति ।।३५७।।

अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टाः, न त्वसङ्गताः पुनरुक्ता वा ।

सदा मध्ये यासामियममृतनिस्यन्दसुरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।

---

अतिविततेत्यादि । अतिविततं विस्तीर्णम् । अत्र हि रविर्जयतीति रवेरुत्कर्षः प्रधानवाक्यार्थः । न खलु विस्तीर्णपथा सञ्चरणं श्रमहेतुर्येन तत्सत्त्वेऽपि श्रमत्याग उत्कर्षहेतुः स्यात् । विततपदेन दीर्घत्वाभिधानेऽपि रथाख्ययानेन सञ्चरणान्न श्रमत्वप्रतीतिः । अत एव यत्र पदादिपदप्रयोगस्तत्रैव तथाभानम् । यथा—'पद्भ्यां व्रजन्नेष न खिद्यते' इत्यादौ । एतेन अतिविततत्वाद्य इत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा तत्परिहृत्य कमलाकरेत्यादिग्रहणम् । दीर्घपथसञ्चारः श्रमहेतुः । तत्सत्त्वेऽपि तत्परित्यागेनोत्कर्षविगमादिति निरस्तम् । अत एवैतन्मतानुसारिणोऽपि परास्ताः ।

यद्व्यतिरेकेण यद्व्यतिरेकस्तदुपादान एव तत्परिपोषणमित्याह—अनुपादान इत्यादि ।

ननु तदाधिकपदत्वं पुनरुक्तत्वं वा स्यादित्यत आह—न त्विति । असङ्गताधिकान्वयाप्रतियोगित्वात् । प्रकृते तदभावात् । एवं न पौनरुक्त्यमपि, तदर्थानामन्यतः प्रतिपत्तिविरहात् । अत्राकाङ्क्षादिसामग्रीसाचिव्येनान्वयबोधादनन्तरं पदजीवत्वेऽनुसन्धानदशायामेवानुकारित्वग्रह इति प्रतीतानुपपत्त्या अर्थदोषताप्रतीत्यनुपपत्त्यामेव शब्ददोषतेति विभागः ।

यत्तु परिमुक्तेत्यादि-कमलाकरेत्यादिविशेषणाभ्यां तेजस्वित्वमित्रोपकारित्वावगम इति मिश्रैरुक्तं तन्न; गमनमात्रेण तेजसो ह्रासकारित्वेन चोपकारस्यानवगमाद् जीर्णानामपि पराधीनगमनसम्भवात्, वैकृत्यदर्शनेनापि ह्रासोपपत्तेश्च ।

कष्टमाह—सदेति । आसत्त्यादिसत्त्वेऽपि विलम्बितप्रतीतिकत्वं तत्त्वम् । मार्गो रीतिः पन्थाश्च । अमृतानां स्वधानां जनानाञ्च । रसः शृङ्गारादि-

प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ।।३५८।।

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं वहति ताः, गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु ? यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति ताः, मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः ।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ।।३५९।।

अत्रेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम् ।

---

र्माधुर्यञ्च । सरस्वती नदी वाणी च । परिमलं चमत्कारः सौगन्ध्यञ्च । प्रसादं झटित्यर्थप्रत्ययं स्वच्छकान्तिश्च । घनो निविडो मेघश्च । व्योमेव काव्यं तदिव व्योम च । रुचय इच्छाः कान्तयश्च । महतां कवीनामादित्यानाञ्च तेषां द्वादशत्वात् झटित्यप्रतीतिश्चानुभवसिद्धैव ।

निन्दित्वा पुरस्कृत्य वा तदन्यथाकरणं विशिष्टा हतिर्व्याहतत्वम् । न चानुचितार्थता, तत्र तिरस्कारस्य व्यङ्ग्यत्वात्, अत्र चाभिधानादिति कश्चित्, तन्न; अत्रापि तिरस्कारस्यानभिधेयतया वक्ष्यमाणत्वात्, शब्दार्थदोषतानुपपत्तेश्च ।

तत्राद्ये जगतीत्यादि । उपादेयत्वेन भाव्यन्त इति भावः । भावेन हेतुः प्रकृतिमाधुर्यम् । इयं मालती लोके भुवनविषये नयनविषयं यातेत्यन्वयः । पस्पशस्तुच्छधान्यम्, अत्यन्तानुपादेयत्वात् । अत एव निन्दितचन्द्रिकारोपेण मुखेऽपि नोत्कर्षावगमः । यं प्रतीत्यादिना अनुचितार्थादस्य भेदबीजोद्घाटनम् । चन्द्रिकापदेन स्वार्थप्रत्यायने तिरस्काराव्यञ्जनात् चन्द्रिकायाः सर्वेषामुपादेयत्वात् । माधवं प्रत्येवारुचिविषयत्वात् । पशुतन्तुवायादयस्तु प्रकृत्यैव

'कृतमनुमतम्' इत्यादि ।

अत्रार्जुनार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिना-मिति किरीटिपदार्थः पुनरुक्तः ।

---

गर्हिता इति तत्प्रत्ययदशायामेवोपश्लोक्यमानतिरस्कारावगमः । अत एवात्र वाक्यार्थमर्यादयैव तिरस्कारोऽवगम्यत इत्यर्थदोषतैवेति भावः ।

द्वितीयं यथा--

देवि त्वन्मुखपङ्कजेन शशिनः शोभा तिरस्कारिणा
पश्यैतानि विनिर्जितानि कमलानि गच्छन्ति विछ्रायताम् ।

इत्यादौ ।

अत्र मुखोत्कर्षाय पङ्कजत्वमारोप्य कमलानि विनिर्जितानीत्यादिना निन्दनम् । पङ्कजकमलपदभेदाच्च निन्दाया न शाब्दबोधान्तर्गतत्वम् । मुग्धायाः स्मरचतुराणि चेष्टितानीत्यादौ तु मुग्धायां स्मरचातुर्यबाधेना-भवन्मतयोगतैव, न व्याहतता, पुरस्कारतिरस्कारौदासीन्यात् । न चानुवादा-युक्तता, अयोग्यताज्ञानस्य शाब्ददोषत्वप्रयोजकत्वात् ।

एकत्र वाक्ये पुनः प्रतीतिविषयः पुनरुक्तः ।

कृतमनुमतमित्यादि । अर्जुनार्जुन सात्यके इत्युपक्रमेण पितृवधा-मर्षितस्याश्वत्थाम्न इयमुक्तिः । दृष्टीनामुत्तरोत्तरापराधलाघवेन क्रमादुपन्यासः । तत्र कर्ता अर्जुनः सात्यकिरनुमन्ता, अन्ये द्रष्टारः । अत्राद्ययोर्वल्द्वेषेण शब्दसम्बुद्धिरन्येषां बुद्धिस्थैव । अत एव तेषां शास्ति-प्रदर्शनाय बुद्धिस्थपरामर्शकयद्भवत्पदेऽनुकर्षः । एतेन संबोध्ययोरबहुत्वे यैरित्यादिषु बहुवचनमनुपपन्नमिति निरस्तम्, सम्बोध्यानां बहुत्वस्य दर्शितत्वात् । असृङ्मेदोमांसैरित्यत्र प्रत्येकं बहुत्वं साकल्यपरिग्राहकम् । तेन सकलासृङ्निर्गमाद् वधप्रत्यायनम् । शास्तिरियं ब्रह्मवधस्य कर्तुर्मेदो-निस्सारणेन चासृक्सत्त्वान्न वधः, अपि तु चिरकालं बलवती पीडा । इदमनुमन्तुर्मांसच्छेदेन च रुधिरमेदसोरनिःशेषोत्पीडालघुत्वम् इदं तु दृष्टवतामिति शास्तितारतम्यम् ।

अत्रेत्यादि । भवद्भिरिति चेति, संबोध्योपस्थितिं विना भवत्पदप्रयोगा-नुपपत्तेः, तस्य सम्बोध्यात्मवाचित्वात् । किरीटिपदार्थोऽर्जुन एव ।

अथ चूर्णकपद्याभ्यां सहैवान्वयबोधकत्वे शाब्दबोधसमय एव पौनरुक्त्य-भानाद् नार्थदोषतेति चेत्, मैवम्; पर्यायशब्दोपनीतेष्वर्थेष्वापाततोऽन्वयत्वेन

यथा वा—

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम्।
कर्णाऽलं सम्भ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥३६०॥

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः ।

---

भानान्न पुनरुक्ततावभासः, समानशब्दसत्त्व एवैकत्वभानादित्युक्तत्वात् ।

अत्र केचिदसूयकाः क्रुद्धस्योक्तायुक्तविस्मरणद्वारेण क्रोधप्रज्वालनया पौनरुक्त्यगुणत्वं वदन्ति दूषणमिदमुद्धरन्ति, तदसत्, संबोध्यविस्मृतौ भवच्छब्दप्रयोगानुपपत्तिरिक्त्युत्वात् ।

न च सभीमेत्यादौ विस्मरणम्, प्रकृतवाचितत्पदप्रयोगानुपपत्तेः, विस्मृतौ प्रकरणाभावात्। सात्यकेरपि पुनरुपादानप्रसङ्गाच्च । व्यक्तिविशेषविस्मृतौ मानाभावात् । नापि भवतेः शत्रा भवत्पदेनोदायुधैः सद्भिरिति प्रत्यायनेन दोष इति वाच्यम्, स्वगतमाप्रकाशभाषितं विनैव व्यक्तेरसंबद्धता स्यात् । सम्बोधनस्य सम्बोध्यदोषोद्भावनफलकतयाऽर्जुनस्य दोषासमन्वये तत्संबोधनवैफल्यं स्यादिति प्रकाशकाराशयो दुरूह एवेति ।

वाक्यार्थपौनरुक्त्यमाह—अस्त्रेत्यादि । अश्वत्थाम्न उक्तिरियम् । मम पितरि सेनानाथे सत्यलं सम्भ्रमेणेत्यन्वयः । और्वो वाडवाग्निः, अस्त्राण्येव ज्वालावह्निशिखाः । प्रतिबलं विपक्षसेना । तस्य जलधित्वेन पितुरौर्वत्वेन च निरूपणाद् वध्यघातकतावगमः । स्थिते रणादभग्ने, तद्भङ्ग एव भवद्भङ्गौचित्यम् । शरीरमात्रदर्शनादिदमा प्रयोगः । हार्दिक्यः कृतवर्मा ।

अत्र चतुर्थपादार्थस्य पौनरुक्त्यं सुव्यक्तमेव । अत्रापि पूर्ववदूह्यं बीजम् ।

किञ्च, मुञ्च हार्दिक्य शङ्कामित्यन्तेन वाक्यार्थपरिसमाप्तौ न पौनरुक्त्यम्, किन्तु समर्थवाक्यसंवलनेनेति प्रतीतस्यानुपपत्तिरित्यर्थदोषतैव । पदार्थो वाक्यार्थ इत्युपलक्षणम्, पदैकदेशार्थेऽपि तत्सम्भवात् । यथा तदीयमातङ्गघटा इत्यादौ, युक्तार्थान्तरेण षष्ठ्यर्थेन तद्धितार्थस्य संबन्धस्य पौनरुक्त्यात् ।

भूपालरत्न　निर्दैन्यप्रदानप्रथितोत्सव ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥३६१॥

अत्र मातङ्गस्य प्राङ्निर्देशो युक्तः ।

स्वपिति यावदयं निकटे जनः
　　स्वपिमि तावदहं किमपैति ते ।
तदयि साम्प्रतमाहर कूर्परं
　　त्वरितमूरुमुदञ्चय कुञ्चितम् ॥३६२॥

एषोऽविदग्धः ।

---

यत्तु 'जगृहे जनतास्तरूणाम्' इत्यर्थबाहुल्यार्थजनपदेन तद्धितार्थो बहुवचनार्थश्च पुनरुक्त इति मतं तन्न, जनपदोत्तरतलप्रत्ययस्यैव समूहार्थत्वात्, 'भैक्षाणी' इत्यत्र अण्प्रत्ययार्थस्यैव बहुवचनेनापि समूहस्यैव नानात्वावगमात् । 'और्वा' इत्यावर्जितस्य ।

पौर्वापर्यस्य त्यागाद् दुष्क्रमता ।

भूपालेत्यादि । राजश्रेष्ठो राजैव । रत्नञ्च सर्वदायित्वचिन्तारत्नमित्यर्थः । तत एव दैन्यनाशकता । विश्राणय देहि । अत्र मातङ्गस्येत्यादि । न्याय इति तुरङ्गापेक्षया मातङ्गस्य प्रकृष्टत्वात् । न च वाकारस्य शक्ताशक्तविकल्पार्थकत्वेन तुरङ्गदानाशक्तस्य मातङ्गदानाक्षमतया वाक्यार्थप्रतीतिदशायामेव बाधकतावगमाच्छब्ददोषतैवेति वाच्यम्, विकल्पस्यैव वाकारार्थत्वात्, शक्ताशक्तयोर्वाक्यार्थगम्यत्वात् । भूपालरत्नस्य तुरङ्गमातङ्गोभयदान एव शक्तत्वाच्च । दोषत्वं पुनरुत्कृष्टजातेः पाश्चात्त्योपादानात् । एतेन देशविशेषमातङ्गापेक्षया तुरङ्गस्योपादेयत्वेन प्राङ्निर्देशेऽप्यक्षतिरिति निरस्तम्, जात्यपेक्षयैवापकर्षप्रकर्षविवक्षणात् । अन्यथा 'शूद्रो वा ब्राह्मणो वा वर्णौ द्वावेव विश्रुतौ' इत्यत्र प्राङ्निर्देशो नानुचितः स्यात्, स्थानविशेषे शूद्रस्योत्कर्षात् ।

अविदग्धप्रतिपाद्यत्वं ग्राम्यता । तेन 'गोरपत्यं बलीवर्दो घासमत्ति मुखेन सः' इत्यस्यापि सङ्ग्रहः । किमपैति का क्षतिः । कर्षकं नीवीरूपकमिति पाठे शरीरम् । अत्रार्थस्यैव ग्राम्यता, न शब्दस्य ।

'मात्सर्यमुत्सार्य' इत्यादि ॥३६३॥

अत्र प्रकरणाद्यभावे सन्देहः, शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः।

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद् यस्याभून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्
विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥३६४॥

अत्र द्वितीयशस्त्रविमोचने हेतुर्नोपात्तः।

---

प्रकरणाभावात् सन्दिह्यमानोऽर्थः सन्दिग्धः।

मात्सर्येत्यादि। वक्तुः शान्तत्वेन शृङ्गारित्वेन वा निश्चिते निश्चय एव।

अनुपात्तहेतुकोऽर्थो निर्हेतुः।

गृहीतमित्यादि। इयमप्यश्वत्थामोक्तिः। विषयो लक्ष्यः। ततो मत्परित्यागात् स्वस्ति विश्रामसुखम्। अत्र द्वितीयेत्यादि।

ननु हेत्वाकाङ्क्षायां वाक्यार्थपर्यवसाने कथमर्थदोष इति चेन्न, पितृकर्तृकशस्त्रपरित्यागस्यैव हेतुत्वानन्वयात्, पित्राचरितकर्मणः पुत्रेणाचरणीयत्वात्। ब्राह्मणानुचितशस्त्रग्रहणस्येव इष्टपर्यवसिते वाक्यार्थेऽनन्तरं मम शोकेन पित्रा परित्यक्तम्, मयाऽपि पितृशोकेन त्यक्तव्यमिति पितृशोकस्यैव हेतुत्वमाकाङ्क्षितमिति तदनुपादानेन तत्साकाङ्क्षता। तदाह—हेतुर्नोपात्त इति।

न च न्यूनपदत्वम्, तदनुपादानेऽप्युक्तरीत्याऽप्यन्वयबोधमान्थर्यविरहात्। न चैवं तथाभूतेत्यादौ विशेष्यपदानुपादानेन विशेषणविशेष्यान्वयस्याभावात् तयोरेव शब्दार्थदोषव्यवस्थापकत्वाद् यत इत्यपि पाठः। न च यत इत्यपि पाठे यतोऽहं त्वां विमोक्षेऽतः स्वस्ति भवत इति। अत इतिपदसाकाङ्क्षता, अनूद्यत्वपरस्य विशेषत उत्तरवाक्यास्थितस्य यत्पदस्य प्रकृतिपरित्यागवाचितयान्यसाङ्क्षाङ्क्षत्वाभावात्।,

इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाध्याक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥३६५॥

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् ।

यथा वा—

उपपरिसरं गोदावर्याः परित्यजताध्वगाः ।
सरणिमपरो मार्गस्तावद्भवद्भिरवेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥३६६॥

अत्र पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धः, न पुनरङ्कुरोद्गमः ।

---

प्रसिद्धिविद्यापदाभ्यां विरुद्धपदस्य प्रत्येकमन्वयः ।

सर्वलोकविदितोऽर्थः प्रसिद्धः । तद्विरोधे प्रसिद्धिविरोधः । शास्त्रगम्यार्थविरोधे विद्याविरोधः । क्रमेणोदाहरति—इदमित्यादिना ।

केन भ्रान्तप्रतारकेण । कमलस्यातङ्को भयं यस्मादेवं वदनं यस्यास्तेन चन्द्रत्वं व्यङ्ग्यम्, लोकेऽप्रसिद्धम् पञ्चशरत्वेनैव ख्यातेः ।

न च कामस्य चक्राभावादयोग्यत्वेन वाक्यदोषता । चक्रनिधानकर्तृत्वमेव परस्योपन्यस्तम्, न तु चक्रवत्त्वम्, येन बाधप्रसङ्गः । अन्यदीयास्त्रस्यान्येनापि विधानसम्भवात् । अन्यदीयास्त्रास्यान्येन विधाने सकलमिति तु प्रतिसन्धानस्य वाक्यार्थप्रतीत्योत्तरकालीनत्वादर्थदोषताव्यवस्थापकमेवेति ।

कविप्रसिद्धं प्रति विरुद्धमाह—उपपरिसरमित्यादि । परिसरो निकटविहित इति । विधेरप्राप्तप्रत्यायकत्वेन नैव कदाप्यासीदिति ध्वनिः । रक्तोऽनुरक्तोऽपि विरोधीकृतः; अत एव हताशयतोक्तिः ।

अत्रेति । पुष्पोद्गमो न नवाङ्कुरोद्गमः । पुष्पोद्गमे नवाङ्कुरोद्गमोऽपि स्यादिति न बाधः । किन्तु तथा कविवर्णनाविरहेण तद्विरुद्धः ।

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ।।३६७।।

अत्रामूर्तापि कीर्तिः ज्योत्स्नावत् प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम् ।

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ।।३६८।।

अत्र ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम् ।

---

लोकविरुद्धस्य कविप्रसिद्धत्वेन न विरुद्धत्वमित्याह—सुसितेत्यादि । कदाचनैकदा कौमुदीमहसि चन्द्रे स्वैरं यान्त्यामिति संबन्धः । अमूर्तागुण-रूपस्य प्रकाशनस्य तेजोधर्मत्वात्, तेजसो द्रव्यत्वाल्लोकविरुद्धत्वं लौकिक-प्रत्यक्षादिप्रमाणबाधितम् । कविष्वित्यादि । कविसम्प्रदायेन तथैव वर्णनात् प्रसिद्धिसामान्याभावो नास्तीत्यर्थः ।

तदुक्तं कविकल्पलतादौ—

असतोऽपि निबन्धेनानिबन्धेन सतोऽपि वा ।
नियमेन च जात्यादिः कवीनां सम्मतिस्त्रिधाति ।।

एतदुक्तम्—मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्योः, इत्यादि ।

शास्त्रविरुद्धमाह—सदेत्यादि । ग्रहोपरागादिकमिति । चन्द्राशनिवत् । समुदितप्रयोगोऽप्युपलक्षणमेतत् । तेन सङ्क्रान्त्यादिग्रहः । तदुक्तम्—

राहुदर्शनसङ्क्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च ।। इति ।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते ।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना ॥३६९॥

एतदर्थशास्त्रेण ।

विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना ।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥३७०॥

अत्र केयूरपदे नखक्षतं न विहितमिति । एतत्कामशास्त्रेण।

अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाध्यसिद्धिसविधं विदधद्विदूरे ।
आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥३७१॥

---

नीतिशास्त्रविरुद्धमाह—अनन्येत्यादि । अभ्यासकौशलाद् वामदक्षिणभ्यां वामदक्षिणकार्यसम्पादकतया बाह्वोर्बलमनन्यसदृशम् । सन्धिविग्रहादयः । षड्गुण एव षाड्गुण्यम्, स्वार्थे ष्यञ् बहुव्रीह्यनन्तरं भावे वा । बलिनामेव षाड्गुण्योपदेशान्नीतिशास्त्रविरुद्धम् ।

कामशास्त्रविरुद्धमुदाहरति—विधायेत्यादि । सदातनसान्निध्यप्रतिपादनापाङ्गत्वरूपम् । करजो नखः । उल्लेखाः क्षतानि ।

अत्रेत्यादि । पदे स्थाने ।

नखक्षतस्य स्थानानि कक्षौ वक्षस्तथा गलः ।
पार्श्वौ जघनमूरू च स्तनगण्डललाटिकाः ॥

इति वात्स्यायनोक्तानि । मणिबन्धेऽनुक्तत्वाच्छास्त्रविरोधः ।

योगशास्त्रविरुद्धमाह—अष्टाङ्गेत्यादि । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टौ योगाङ्गानि । तदुक्तम्—

यमश्च नियमश्चैवमासनं प्राणसंयमः ।
प्रत्याहारो धारणा च ध्यानञ्चैव समाधियुक् ॥
एतानि कथितान्यष्टौ योगाङ्गानि मनीषिभिः ।

अत्र विवेकख्यातिः, ततः सम्प्रज्ञातसमाधिः, पश्चादसम्प्रज्ञातः, ततो मुक्तिः, न तु विवेकख्यातौ । एतद् योगशास्त्रेण ।

एवं विद्यान्तरैरपि विरुद्धमुदाहार्यम् ।

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥३७२॥

अत्र ततः किमिति न नवीकृतम् । तत्तु यथा—

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥३७३॥

---

परिशीलनं पुनः पुनराचरणम् । कीलनमभ्यासदार्ढ्यम् । सिद्धयो नियमादयः । विवेकख्यातिः प्रकृतिपुरुषयोर्भेदावभासः । सम्प्रज्ञातः सविकल्पकसमाधिः । यत्रात्मा विषयान्तरञ्च भासते । असम्प्रज्ञात आत्मातिरिक्तविषयाग्रही समाधिः । विद्यान्तरैरागमवैद्यकादिभिः ।

विच्छित्तिविशेषानाधायकः पुनः प्रतीतिविषयोऽर्थो नवीकृतः ।

प्राप्ता इति । असति तत्त्वज्ञाने श्रीप्राप्त्यादेरकिञ्चित्करत्वम्, तनुभृतां तनुभिर्मनुष्यशरीरैः, न तु पिशाचत्वादिरूपेण ।

अत्रेति । अत्र किमिति पदार्थः पूर्वं यथा प्रतिपन्नः परतोऽपि तथैवेति न नवीकृतश्च । न च कथितपदत्वम्, स्वार्थबोधसमाप्तेषु वाक्येष्वेकत्रापि पुनरुक्तेरभावात् । तद्विषये 'अधिकरतलतल्पम्' इत्यादावेकत्रैव वाक्ये लीलापदं द्विप्रयुक्तमिति भेदः ।

केचित्तु पर्यायपदान्तरोपादाने विच्छेदविशेषाभावेऽप्यस्य सम्भव इत्याहुः ।

यदीत्यादि । अनलादीनां दाहकत्वादय इव सतामविषादिता प्रकृतिरिति । मालाप्रतिवस्तूपमालङ्कारनिर्वाहेण विच्छित्तिपोषणान्न दोषः, प्रकृते तु नैवमिति भावः ।

यत्रानुल्लिखिताख्यमेव निखिलं निर्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतैरुल्लङ्घ्य यत्सम्पद-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥३७४॥

अत्र 'छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता' इति सनियमत्वं वाच्यम् ।

---

सनियमानियमविशेषाविशेषपदैः सह परिवृत्तपदस्य प्रत्येकमन्वयः, तेन दोषचतुष्टयम् । विवक्षितनियमस्य शब्दादप्रतिपत्तिर्नियमपरिवृत्तिः ।

यत्रेत्यादि । अनुल्लिखिताख्यमनुद्दिष्टनामकम् । याता इत्यादि । यस्य सम्पदः । प्राणिमनोगोचरा अपि न भवन्तीत्यर्थः । आभासः कान्तिः ।

साधारणमणिं सभाजयति । तस्य पाषाणत्वमेवोचितम्, न मणित्वम् । चिन्तामणेः प्रकृतमणिगणनायां गणनमनुचितमित्यर्थः ।

छायामात्रेत्यादि । मात्रेण धर्मान्तरव्युदासः । तत एव तस्योत्कर्षः । मण्यन्तराणाञ्च निकषः स्यात् ।

न च न्यूनपदता, आभासस्यैवान्वयप्रतियोगित्वेन तद्वाचकपदसद्भावात्; प्रकृष्टधर्मान्तरासहकृतत्वस्य, परमत्र प्रतियोगितावच्छेदकत्वादन्वयप्रतियोग्युपस्थापकानुपादान एव न्यूनपदत्वात् ।

नापि मात्रार्थाप्रतीतावश्मत्वमेवोचितम्, कुत इत्याकाङ्क्षानुवृत्तेः शाब्दवैगुण्याच्छब्ददोषता । यत्किञ्चिदेवोत्कृष्टधर्मवतोऽन्वयात् । अलोकोत्कृष्टधर्मवतो गणनमनुचितमिति रूपेण वाक्यार्थोपपत्तेः । उत्कृष्टधर्माश्च यत्रेत्यादिनोपात्ताः । अनन्तरञ्च चिन्तामणिवृत्तिधर्मव्यवच्छेदाय मात्रार्थोपेक्षणीय इति प्रतीतस्यैवानुपपत्तिः । अत एवानभिहितवाच्यत्वमपि निरस्तम् । मात्रार्थं विनाऽप्यन्वयोपपत्तेः, तस्यावश्यानपेक्षणीयत्वात् ।

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चत्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते तेऽम्बुपानाभिलाषः ।।

अत्र 'शोण एव' इति नियमो न वाच्यः ।

---

अविवक्षितनियमस्य शब्देन प्रतिपादनमनियमपरिवृत्तिः ।

वक्त्रेत्यादि । सरस्वती शब्दो नदीभेदश्च । शोणो रक्तो नदश्च, सादृश्यात् । सेतुदर्शनाच्च । काकुत्स्थवीर्यस्मरणम् । दक्षिणः सव्येतरो दानदक्षो वा, दिग्विशेषश्च । समुद्रो मुद्राङ्गुलीयकं तत्सहितो जलधिश्च । वाहिन्यः सेना नद्यश्च । मानसे मनसि सरसि च ।

नियमो न वाच्य इति । पिपासोर्जलमात्राभिलाषेण नद्यन्तरव्यवच्छेदस्याविवक्षितत्वाद् ।

न चाधिकपदता, तात्पर्यग्राहकैवकारसाचिव्येन लक्षणया नियमबोधकस्य शोणपदस्यानधिकत्वान्नियमांशमात्रस्याधिक्यात् शोणेतरावृत्तिशोणत्वस्य लक्ष्यतावच्छेदकत्वात् ।

ननु धवलशोणयोरभेदे वाक्यार्थे नियमांशस्याधिकत्वेनाकाङ्क्षाविरहाच्छब्ददोषतापत्तिरिति चेन्मैवम्, अभेदारोपदशायामधिकत्वेनाप्रतीतेः । जलाभिलाषानौचित्यासञ्जनकाल एव तद्भानात् । जलत्वेनैव जलस्य पिपासानिवर्तकत्वात् ।

न चेतरव्यवच्छिन्नत्वेनेति प्रतीतानुपपत्त्या शब्ददोषताव्युदासः, अयोगव्यवच्छेदार्थत्वेऽपि दोषः, तस्यापि नियमविशेषत्वादिति ।

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥३७६॥

अत्र 'ज्योत्स्नाम्' इति श्यामाविशेषो वाच्यः ।

कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकरालय मावमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥३७७॥

अत्र 'एकेन किं न विहितो भवतः स नाम' इति सामान्यं वाच्यम् ।

---

श्यामेत्यादि । श्यामां रात्रिम् । कूर्चकं चूलिका । तन्त्रम् औषधम् । अथ विकल्पे ।

चन्द्रस्यैवानयोः शोभाहेतुत्वेन तद्विशेषयति— चूर्णयतेति । विलम्बासहत्वेन क्षणादित्युक्तम् । मुद्रा चिह्नं श्यामाविशेष इति ।

तमिस्रायाः श्यामीकरणवैफल्येन सामान्योपन्यासानुयोगात् श्यामापदस्य वृत्त्यवच्छेदके रात्रित्वप्रकारकज्योत्स्नातात्पर्येण न न्यूनपदत्वम्, न वाऽवाचकत्वम् ।

कल्लोलेत्यादि । वेल्लितं वल्गितम् । मकरालयो जलधिः । पुरुषोत्तमः श्रीकृष्णः पुरुषश्रेष्ठश्च ।

वस्तुनि सत्येवोपकारः स्यादिति वाक्यार्थोपपत्तावनन्तरं विशेषस्योपकारित्वे सामान्यस्य कथमादर इति प्रतीतानुपपत्तिनिरासायैकपदमपेक्षणीयम् । तदुपादाने च येषामेकेनोपकृतं तदितरेष्वनादरो नोचित इति न काचिदनुपपत्तिः । प्रतीत्यनुपपत्तिविरहेण कौस्तुभपदस्याधिक्यमेकपदस्य न्यूनत्वमपि निरस्तम् ।

मिश्रास्तु सामान्यतो रत्नावमाननस्य वाक्यार्थस्य प्रकृतिविशेषोत्कर्षे प्रतिपादनं न परिपन्थीति स्यादेव वाक्यार्थप्रतीतिः, तन्न, विशेषस्योत्कर्षे तदितरसामान्यानादरे हेत्वाकाङ्क्षाया अनिवृत्तेर्वाक्यदोषप्रसङ्गात् ।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षश्च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नञ्च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥३७८॥

अत्र स्त्रीरत्नम् 'उपेक्षितुम्' इत्याकाङ्क्षति । नहि परस्येत्यनेन सम्बन्धो योग्यः ।

---

अनुपात्तार्थाकाङ्क्षाविषयार्थकत्वं साकाङ्क्षत्वम् ।

अर्थित्व इति । प्रकटीकृते मन्मुखेन सदसि प्रकाशितेन प्रत्युताविरोधेन केवलं न फलप्राप्तिः, प्रत्युत विरुद्धचरितो दाशरथिस्तया कन्यया युक्तः, द्रुह्यन् मारीचताडकादिस्वगोत्रहिंसकः । विरुद्धचरितो यज्ञरक्षकः । विस्रंसनमवमाननम् । कथं मृष्यते, कथं न द्विषति ? मृषधातुर्द्वेषार्थः ।

स्त्रीरत्नस्य द्वेषायोग्यत्वे कथं कथमित्यादिना अन्वय इत्याह—उपेक्षितुमितीति । अथ परस्येत्यनेन संबन्धान्न योग्यतेत्याह—नहीत्यादि । मानाद्यन्वये निराकाङ्क्षत्वात् । न चानुषङ्गः, विस्रंसनादिना व्यवधानात् । असम्बद्धव्यवाये तु वैषम्यार्थान्निषेधनमित्युपगमात् ।

अत्र न्यूनपदत्वशङ्कायां न्यूनपदत्वं न पुनरमर्षणक्रियोपादानान्निरस्तमिति टीकाकृतः ।

तेषामयमाशयः—स्त्रीरत्नमित्यत्रामर्षणक्रियायामेव तात्पर्यम्, न तु क्रियान्तरे, येन तदनुपादाने न्यूनता स्यात् । केवलं स्त्रीरत्नामर्षणक्रियायोग्यताघटकत्वेनोपेक्षायामपेक्षणीयत्वम्, तन्न्यूनतायाश्च न न्यूनपदता, अन्यथा 'घटेन जलमाहर' इत्यत्र छिद्रेतरत्वानुपादाने तथाप्रसङ्गात् । तेन विशेषणविशेष्यभावान्वये क्रियाकारकभावान्वये वाऽमीषां यत्किञ्चिदनुपादान एव न्यूनतेति नात्र प्रसङ्ग इति ग्रन्थकाराभिप्रायानभिज्ञानामयमभिप्रायो गर्हितप्रायः, 'तथाभूताम्' इत्यादावित्थंपदन्यूनतायामव्याप्तेः । तस्य खिन्ने खेदजननानौचित्यासञ्जनयोग्यताया एव निर्वाहकत्वात् । अन्यथा प्रकारान्तरेण खिन्ने प्रकारान्तरेण खेदौचित्यात् । तर्हि का गतिरिति चेदुच्यते—यत्पदोपादाने विवक्षितान्वयस्तदनुपादान एव न्यूनता । यथा दर्शितोदाहरणादौ । न चाश्रुततया उपेक्षितुंपदाध्याहारेऽपि विवक्षितान्वयानुपपत्तेः ।

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥३७९॥

अत्र 'स्याच्चेदेष न रावणः' इत्यत्रैव समाप्यम् ।

---

तथाहि कर्मपदेभ्यः श्रूयमाणं चकारत्रयं कर्मणामेकक्रियान्वयित्वरूपसाहित्यतात्पर्यग्राहकम् । न चात्र साहित्यं सम्भवति, परोत्कर्षस्वापकर्षोपेक्षाया द्वेष्यत्वासम्भवात् । न च योग्यताबलादुपेक्षायाः स्त्रीरत्नेनैवान्वयः, साहित्यतात्पर्यग्रहे यत्किञ्चिदेकान्वयस्य स्वरूपायोग्यत्वात् । 'घटश्च पटश्च मृण्मयः' इति पटपरिहारे मृण्मयस्य घटान्वयादर्शनात् । तस्मादुपेक्षितुंपदस्यानुपादानेऽप्युपादाने च न प्रकृतान्वय इति न न्यूनपदत्वमिति । अत एव शब्दतोऽपि दोषस्यानपायाच्छब्दालम्बनविरहेणार्थदोषतैव । तेनार्थस्यार्थान्तरनित्यसापेक्षत्वं दोषः ।

पूर्वप्रतीतानाकाङ्क्षितार्थसमाप्यत्वमपदयुक्तता ।

आज्ञेत्यादि । प्रणयिनीत्वेन रूपणाद् दम्पत्योरविच्छेदसूचनम् । शास्त्राणि चक्षुरिति बहुवचनैकवचनाभ्यां सर्वशास्त्रविषयकैकज्ञानसूत्रणम् । चक्षुषो नवत्वेन विषयग्रहाधिक्यपदनिरासः । दिवि भवा दिव्याः । स्थानद्युतिदेवयोगेत्यर्थः । द्रुहिणो ब्रह्मा, जगद् विद्रावयतीति रावणः ।

वीरचरिते सन्त्येव बहवो गुणाः, तथापि बलवानेको दोषः, तानपवदतीति उपक्रमे रावणपुरोहितं शौष्कलं प्रति जनकपुरोहितस्य शतानन्दस्योक्तिरियम् । तेन चूर्णकसाचिव्येनोपेक्षावाक्यार्थः 'स्याच्चेदेष न रावणः' इत्यनेनैव प्राप्तः समर्थनं नाकाङ्क्षतीति अस्थानसमाप्यत्वम् ।

न च तर्हि निराकाङ्क्षाभिधानेन शब्ददोषतैवेति वाच्यम्, समर्थसहकृतेनैतद्वाक्येनान्यत्र सर्वगुणासम्भवेन रावण एवेदृग् वर इत्यपेक्षया वाक्यार्थोपपत्तावनन्तरं चूर्णकानुसन्धानेन दोषावतारात् । प्रतीत्यनुपपत्तिविरहाद नाधिकपदत्वम्, तस्याप्यन्वयात् ।

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना नयेन चालङ्क्रियते नरेन्द्रता ॥

अत्र श्रुतबुद्ध्यादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् ।

"लग्नं रागावृताङ्ग्या" ॥३८१॥

इत्यत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते ।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिना-
मपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥३८२॥

अत्र 'शयितः प्रयत्नेन बोध्यसे' इति विधेयम् ।

---

विजातीयसमभिव्याहारः सहचरभिन्नता ।

श्रुतेनेत्यादि । अलङ्क्रियत इति दीपकम् । श्रुतं विद्या । व्यसनं द्यूतादि । समाधिर्धर्मचिन्ता ।

श्रुतबुद्ध्यादिभिरित्यादि । उत्कृष्टैरुत्कृष्टस्य भूषणमिति बुद्धेरवच्छेदको निकृष्टानुप्रवेशः ।

न च क्रमभेदः, सर्वस्यैवकारस्य युगपदेकक्रियान्वये प्रस्तावान्तरविरहात् । प्रस्तुतवैरूप्यापादकस्यैव तद्दोषत्वात् ।

अत्र वाक्यार्थप्रतीत्यनन्तरमेव वैरूप्यप्रतिभासात् प्रतिपादितविवक्षितार्थविरोधिव्यञ्जकोऽर्थः प्रकाशितविरुद्धः । विरुद्धं प्रकाश्यत इति गर्भितप्रस्तावे व्याख्यातमेव ।

[ ग्रन्थपातः ][1]

---

१. प्रयत्न.......... इत्यारभ्य मातङ्गाः किमु..... इत्यन्तं यावद् टीकाग्रन्थपातः ।

यथा वा—

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥३८३॥

अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम् ।

अरे रामाहस्ताभरणभसलश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन ।
सरोहंसोत्तंस प्रचलदलनीलोत्पलसखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥३८४॥

अत्र 'विरहिप्राणदमन' इति नानुवाद्यम् ।

'लग्नं रागावृताङ्ग्या' इत्यादि ॥३८५॥

अत्र 'विदितं तेऽस्तु' इत्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः ।

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथास्य जायते पातो न तथा पुनरुन्नतिः ॥३८६॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति, तथापि तेषां तत्राप्रकृतत्वात् प्रकाशनं न कृतम् ।

**कर्णावतंसादिपदं कर्णध्वनिनिर्मितिः ।**
**सन्निधानादिबोधार्थम्**

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते, तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये । यथा—

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥३८७॥

अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥३८८॥

अत्र कर्ण-श्रवण-शिरःशब्दाः सन्निधानप्रतीत्यर्थाः ।

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे ।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव ॥३८९॥

अत्र धनुःशब्द आरूढत्वावगतये । अन्यत्र तु--

ज्याबन्धनिष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरम्परेण ।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात् ॥३९०॥

इत्यत्र केवलो ज्याशब्दः ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥३९१॥

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः ।

सौन्दर्यसम्पत्तारुण्यं यस्यास्ते ते च विभ्रमाः ।
षट्पदान् पुष्पमालेव कान् नाकर्षति सा सखे ॥३९२॥

अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः । निरुपपदो हि माला-शब्दः पुष्पस्रजमेवाधत्ते ।

**स्थितेष्वेतत्समर्थनम् ॥५८॥**

न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते ।

जगाद मधुरां वाचं विशदाक्षरशालिनीम् ॥३९३॥

इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ "गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित् प्रयोगः कार्यः" इति न युक्तम् ।

युक्तत्वे वा—

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम् ।
पादाभ्यां दूरमध्वानं व्रजन्नेव न खिद्यते ॥३९४॥

इत्युदाहार्यमिति ।

**ख्यातेऽर्थे निर्हेतोरदुष्टता**

यथा—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

अत्र रात्रौ पद्मस्य सङ्कोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति तु 'न भुङ्क्ते' इति हेतुं नापेक्षते ।

**अनुकरणे तु सर्वेषाम् ।**

सर्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम् । यथा—

मृगचक्षुषमद्राक्षमित्यादिकथयत्ययम् ।
पश्यैष च गवित्याह सुत्रामाणं यजेति च ॥३९६॥

**वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ ॥५९॥**

वक्तृ-प्रतिपाद्य-व्यङ्ग्य-वाच्य-प्रकरणादीनां महिम्ना दोषोऽपि क्वचिद् गुणः, क्वचिन्न दोषो न गुणः । तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः । क्रमेणोदाहरणम्—

दीधीङ्वेवीङ्समः कश्चिद् गुणवृद्ध्योरभाजनम् ।
क्विप्प्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते ॥३९७॥

यदा त्वामहमद्राक्षं पदविद्याविशारदम् ।
उपाध्यायं तदाऽस्मार्षं समस्प्राक्षं च सम्पदम् ॥३९८॥

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥३९९॥

वाच्यवशाद् यथा--

मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः
सारङ्गा महिषा मदं व्रजथ किं शून्येषु शूरा न के ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥

अत्र सिंहे वाच्ये परुषाः शब्दाः ।

प्रकरणवशाद् यथा--

रक्ताशोक कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासङ्घट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥४०१॥

अत्र शिरोधूननेन कुपितस्य वचसि ।

---

इभारिः सिंहः । अत्र सिन्धुशब्दः । सिन्धुध्वाने लाक्षणिकः । तद्वद् ध्वनितु-मुच्चरितुं शीलमस्य । द्वितीयगर्जितपदं सफलत्वपरम् । अत्र सिंहविषयकरति-भावस्य गुणानाश्रयत्वेन प्रकृतानुपयुक्तौजोव्यञ्जकत्वेऽपि सिंहे ऊर्जस्विनि वर्णनीये तन्निष्ठौजःप्रकाशकदीर्घसमासोऽपि विकटवर्णानुगुणः ।

रक्ताशोकेत्यादि । रक्तः शोणोऽनुरक्तश्च । अशोको वञ्जुलः शोका-पनोदकश्च । उदरकार्श्येन गमनलाघवम् । नु संबोधने । सङ्घट्टः परस्परोप-मर्दः । मकरन्दालाभेन छदानामपि दंशः—अयमदृष्टपूर्वः ।

अत्र प्रकरणगम्यविप्रलम्भानौचित्येऽपि प्रस्तुतशिरोधूननप्रतिपादित-दर्शनापलापप्रादुर्भूतक्रोधप्रकर्षत्वेन दीर्घसमासविकटवर्णयोर्गुणत्वम्, तेना-ङ्गस्य क्रोधस्य प्रकर्षद्वारा अङ्गिनो विप्रलम्भस्यापि प्रकर्षः ।

क्वचिन्नीरसे न गुणो न दोषः । यथा—

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥४०२॥

अप्रयुक्तनिहितार्थौ श्लेषादावदुष्टौ । यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥४०३॥

अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थौ ।

---

नीरसे शृङ्गारादिशून्ये, न तु निरास्वादे, तत्र काव्यताविरहात् ।

शीर्णेत्यादि । अपघनैरवयवैर्व्रणवेदनया घर्घरः शब्दो घटयति नवीकरोति । उल्लाघो नीरुक्त्वम् । द्विगुणातिशयिताघनघृणाक्षपानिघ्ना आतपाः । निर्विघ्ना विघ्नध्वंसहेतुः, घर्मांशोः सूर्यस्य । घृणयो रश्मयः । अंहः पापम्, तद्विघातं विदधत्वित्यर्थः ।

अत्र घोषवन्तो दृढप्राणा वर्णा ऊर्जस्विनां शृङ्गारादिवीरादिरसाभावान्नापकर्षोत्कर्षकाः । प्रकृतस्य भावस्य गुणीभावादकिञ्चित्कराः । श्लेषादावित्यादिपदाद् यमकादिपरिग्रहः ।

येनेत्यादि । स श्रीकृष्णः पायाद्, येनानः शकटं ध्वस्तम् । अभवेन जन्मरहितेन बलिमसुरभेदं जयति । पुरा पूर्वं स्त्रीकृतः नारीकृतः । असुराणाममृतपानविरसनाय तत्प्रलोभिनीं परमरमणीयां कैटभीं श्रियमाश्रितः । उद्वृत्त उद्धत्तो भुजङ्गः कालियं हतवान् । विशिष्टविधेर्विशेष्यबाधे विशेषणपर्यवसानेन न हतौद्धत्यहानिः । आरवे शब्दब्रह्मणि लयो यस्य । अगं पर्वतं गोवर्द्धनाख्यम् । गां पृथिवीम् । शशिनं मथ्नातीति शशिमद् राहुस्तस्य शिरो हरति । अन्धका यादवास्तेषां क्षयं निवासं कृतवान् । सर्वं ददातीति सर्वदः । माधवः श्रीपतिः ।

अश्लीलं क्वचिद् गुणः। यथा सुरतारम्भगोष्ठ्याम्,
"द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु"
इति कामशास्त्रस्थितौ।

करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥ ४०४ ॥

शमकथासु—

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे।
क्लेदिनि स्त्रीव्रणे सक्तिरक्रमेः कस्य जायते ॥४०५॥

---

पक्षे-उमाधवो महेशः। सर्वदा सर्वकालम्, येन ध्वस्तकामेन पुरा बलिजितो विष्णोः कायोऽस्त्रीकृतो बाणत्वमापितः, त्रिपुरदाहे विष्णुः शरोऽभूदिति इतिहासः। भुजङ्ग एव हारो वलयं च यस्य। गङ्गां जाह्नवीं दधे। शशियुक्तं शिरो यस्य स एव हरः। अन्धकोऽसुरभेदः, क्षयो नाशः।

अत्रालङ्कारकृतचारुत्वनिर्वाहकत्वेन प्रतीतिमान्थर्यस्याप्यदूषणत्वात् तौ न दुष्टाविति बोध्यम्।

'दधार हृदये गौरी देवं हिमकरालयम्' इत्यत्र श्लेषनिर्वाहकत्वेन हिकारस्य निरर्थकत्वमिति यत् कैश्चिदुक्तं तदयुक्तम्, श्लेषनिर्वाहप्रयोजनान्तरसत्त्वेन पादपूरणमात्रप्रयोजनकत्वस्वरूपाभावात्, धर्मिसत्तायामेवोत्कर्षकत्वात्।

असमर्थानुचितार्थनिरर्थकावाचकानां नित्यदोषत्वेन तानपहायाश्लीलस्य प्रतिप्रसवमाह—सुरतेति। सुरतारम्भा च गोष्ठी। पिशूनयेत् सूचयेत्।

करिहस्तो गजशुण्डा। कठिनयोनिशैथिल्यापादको बहिष्कृतमध्यमाङ्गुलीकस्तर्जन्यनामिकासंयोगश्च। तदुक्तम्—

तर्जन्यनामिकायुक्ता मध्यमा स्याद् बहिष्कृता।
करिहस्तः समुद्दिष्टः कामशास्त्रविशारदैः ॥ इति।

सम्बाधे सङ्कटे सङ्कुचिते च। विलोडिते चपलिते विकासिते च। उपसर्पन् समीपं गच्छन् प्रविशंश्च। ध्वजः केतुः पुंल्लिङ्गं च। साधनं सैन्यं वराङ्गञ्च। उदासीनवञ्चनया स्वार्थसम्पत्त्या रसोत्कर्षकतया गुणत्वं तु।

जुगुप्सोदाहरणमाह—शमेत्यादि। शमाय वैराग्याय कथा शमकथा। पाटितं विदारितम्। इह वैराग्यहेतुघृणोत्पादनम्।

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥४०६॥

अत्र भाव्यमङ्गलसूचकम् ।

सन्दिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतिपत्तिकारित्वेन व्याजस्तुतिपर्यवसायित्वे गुणः । यथा—

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥४०७॥

---

अमङ्गलमाह—निर्वाणेत्यादि । प्रशमो युद्धारम्भनिवृत्तिः, मरणञ्च । रक्ताऽनुरक्ता रक्तं रुधिरञ्च । प्रसाधिता वशीकृता अलङ्कृता च । विग्रहो युद्धं शरीरञ्च । स्वस्मिन्नात्मनि प्रकृतौ तिष्ठन्ति, ते स्वस्थाः स्वर्गगामिनश्च । वैकल्पिकविसर्गलोपान्न वैरूप्यम् ।

अत्र दुर्योधनामङ्गलस्य नायकमङ्गलत्वेन गुणत्वम् ।

सन्दिग्धेत्यादि । सन्देह आपाततः कुत इत्यत आह—नियतेत्यादि । नियतः प्रकृतोऽर्थः । प्रतिपत्तिर्निश्चयः ।

हेतुमाह—वाच्येत्यादि । वाच्यो वर्णनीयो राजा । महिम्ना महिमप्रतिपत्त्या । न हि कवेः स्ववर्णनमभिप्रेतम्, अकिञ्चित्करत्वात् ।

राजवर्णनयैव दैन्यनाशादिति वाच्यं महिमा, तर्हि दोषाभाव एवेत्याह—व्याजेत्यादि । संयति बाहुल्येन राजोत्कर्षप्रतीतेर्गुणत्वमित्यर्थः ।

ननु नृपविषयकभावस्यारसत्वेन 'शीर्णघ्राण०'इत्यादाविवानुभयप्राप्तौ कथं गुणत्वमिति चेत्, मैवम्; भावस्य गुणवत्त्वविरहेण श्रुतिकटुप्रभृतीनां गुणव्यञ्जकानां तथात्वात् । व्याजस्तुतेरलङ्कारस्य भावोत्कर्षकत्वेनाविरोधात् ।

पृथुकार्तेत्यादि । पृथु विपुलं कार्तस्वराणां सुवर्णानां पात्रं यत्र, पृथुकानां शिशूनामार्तस्वरस्य क्षुत्कारवद्ध्वनेरधिकरणञ्च । भूषिता अलङ्कृता

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतत्वं गुणः । यथा—

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद् विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥४०८॥

---

धरण्यामुषिताश्च । विलसन्त्यः शोभमानाः करेणवो हस्तिन्यः, विले छिद्रे सीदन्ति विलसत्काः मूषिकास्तेषां रेणवश्च ।

प्रतिपादको वक्ता, प्रतिपाद्यः शब्दप्रयोगोद्देश्यः, ज्ञत्वं तत्तच्छास्त्रपटुत्वम् ।

आत्मनि चिदानन्दे आरमन्त इत्यात्मारामाः । निर्विकल्पे भेदाग्राहिणि ।

अत्र हेतुः—विघटितेत्यादि । तमोग्रन्थिर्मिथ्याज्ञानजन्यः संस्कारः, हेतुर्ज्ञानोद्रेकम् । ज्ञातं चिदानन्दरूपम् । तत्र हेतुः—सत्त्वेत्यादि । सत्त्वं गुणविशेषः, तन्निष्ठाः ज्ञानान्तरावशगाः । नरकजनकानि कर्माणि च स्वर्गजनकज्योतींषि । तत्रा परस्तात् । वृत्त्या प्रवृत्त्या जीवत्युक्त इत्यर्थः । अन्धो यथा अर्थाग्रही । आधुनिकत्वनिरासाय पुराणपदम् ।

अत्र प्रतिपाद्यप्रतिपादकौ सहदेवभीमसेनौ, तावस्त्रविज्ञाविति न प्रतीतिविलम्बः ।

नन्वेवं दोषाभावत्वमेव कथं गुणत्वमिति चेत्, न; इतराज्ञातज्ञातृत्वेन स्वज्ञानोत्कर्षद्वारा भावोत्कर्षकत्वात् ।

ननु सामाजिकस्य रसोद्बोधे काव्यप्रतिपाद्यप्रतिपादकयोर्ज्ञत्वमकिञ्चित्करमिति चेन्मैवम्, सामाजिकानां स्वस्मिन् प्रतिपाद्यप्रतिपादकभेदानध्यवसायेन श्रवणापाटवदशायामास्वादलाभात् । अत एव भेदानध्यवसायेन तत्संस्कारोद्बोधकादेव सामाजिकसंस्कारोद्बोध इति नानुपपत्तिः ।

वस्तुतस्तु प्रतिपाद्यप्रतिपादकयोः कविसामाजिकयोर्ज्ञत्वे तच्छास्त्रप्रावीण्ये सामाजिकान्तरापेक्षया झटित्यास्वादोद्बोधेन गुणत्वम्, काव्यविज्ञत्वेन तच्छास्त्राप्रयुक्तादेरप्रयोगः । तत्प्रयोगे विरलप्रयोगाहितसंस्कारा-

स्वयं वा परामर्शे यथा—

षडधिकदशनाडीचक्रमध्यस्थितात्मा
　हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः।
अविचलितमनोभिः साधकैर्मृग्यमाणः
　स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥४०९॥

---

पाटवेनाप्रतीतेनैव, तेन झटित्यर्थप्रत्यायनाप्रसङ्गात् । अनयोरेव कविसामाजिकस्थानीयत्वात् । अत एव वैयाकरणवक्तरीत्याद्युक्तम् ।

स्वयं तच्छास्त्रविज्ञानवता ।

षडधिकेत्यादि । नाड्यः षोडश । तदुक्तं गोरक्षसंहितादौ—

इडा च पिङ्गला चैव सुषुम्ना च परा स्मृता ।
गान्धारी हस्तिजिह्वा च पूषा चैव वशा तथा ॥
अलम्बुषा कुहूश्चैव शङ्खिनी दशमी स्मृता ।
तालजिह्वेभजिह्वा च विजया कामदा परा ॥
अमृता चक्रनामा च नाड्यो वायुसमाश्रिताः । इति ।

सिद्धिरणिमादिः । साधका योगिनः । ते च चत्वारः । तदुक्तं योगिनीतन्त्रे—

सम्प्राप्तो घटमानश्च सिद्धः सिद्धतमश्च सः ।
तत्र प्राप्तोपदेशश्च पारम्पर्यक्रमेण यः ॥
प्राप्तयोगस्तु संज्ञेयस्त्रिविधोऽपि मनीषिभिः ।
चेतसो घटमानत्वं चालितस्य पुनः पुनः ॥
यः करोति तमिच्छन्ति घटमानं मनीषिणः ।
तदेव चेतसो नान्यद् द्वितीयमवलम्बते ॥
सिद्धयोगः स विज्ञेयो योगी योगफलार्थिभिः ।
यः पुनर्यत्र तत्रैव संस्थितोऽपि यथा तथा ॥
भुञ्जानस्तत्फलं तेन हीयते न कथञ्चन ।
सुसिद्धः स तु विज्ञेयः सदा शिवसमः प्रिये ॥ इति ।

शक्तिभिर्ज्ञानेच्छाकृतिभिः । शक्तिः पार्वती, तस्या नाथः । अत्रापि पूर्ववदालोचनीयम् ।

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः । यथा--

फुल्लुक्करं कलमकूरणिहं वहन्ति
जे सिन्धुवारविडवा मह वल्लहा दे ।
जे गालिदस्स महिसीदहिणो सरिच्छा
दे किं च मुद्धविअइल्लपसूणपुञ्जा ॥४१०॥

अत्र कलम–भक्त–महिषी–दधिशब्दा ग्राम्या अपि विदूषकोक्तौ ।

न्यूनपदं क्वचिद् गुणः । यथा—

---

अधमोक्तिषु हास्यकरीषु ग्राम्योक्त्या हास्यपरिपोषात्—
पुष्पोत्करं कलमभक्तनिभं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षास्ते किञ्च मुग्धविचकिलप्रसूनपुञ्जाः ॥

विचकिलं मल्लिका ।

अत्रेत्यादि । कलमेत्यादि । प्राकृतविवरणम् । तेन कलमकरेति महिषीदहीति अविदग्धप्रयोज्यत्वाद् ग्राम्योऽपि विदूषकोक्तौ गुणः, हास्यरसपरिपोषकत्वात् । 'स पुनर्वेषभाषाभिर्हास्यकरः कलहरतिर्विदूषकः स्यात् । स्वधर्मज्ञ' इति तल्लक्षणात् । कर्पूरमञ्जर्यां विदूषकोक्तिरिति ।

नेयार्थादीनां नित्यदोषतैव । अत्र केचित्–यदि शीघ्रोपस्थितिस्तदा नेयार्थत्वमपि गुणः । यथा 'काञ्चीगुणस्थानम्' इत्यादावित्याहुः । तत्र शीघ्रोपस्थितौ मानं मृग्यम् । किं स्वभावः प्रसिद्धिर्वा । नाद्यः, सर्वत्र रूढिकल्पनाया दुर्बलत्वापातात् । स्वभावेन गतार्थत्वात् । द्वितीये तु प्रसिद्धिरेव रूढिरिति तत्संबन्धे नेयार्थताप्रसङ्गात् । तदभावे च प्रसवानौचित्यात् । प्रहेलिकादौ काव्यत्वविरहेण कुतस्तत्र श्लिष्टस्य गुणता ? एवं विरुद्धार्थविवक्षायां विरुद्धमतिकृतो गुणत्वमिति यदुक्तम्, तदसत्; विरुद्धमतिकारित्वस्वरूपविरहात् कवेरविवक्षितस्यैव विरुद्धत्वात् ।

काव्यमात्रगामि दोषप्रतिप्रसवमाह—न्यूनपदमित्यादि । प्रतिकूलवर्णादीनां नित्यदोषत्वेन तत्परित्यागो न्यूनपदमित्यर्थः ।

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माऽति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम्॥४११॥

क्वचिन्न गुणो न दोषः । यथा—

तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥४१२॥

अत्र पिहितेत्यतोऽनन्तरम् "नैतद्यतः" इत्येतैर्न्यूनैः पदै-र्विशेषबुद्धेरकरणान्न गुणः । उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधत इति न दोषः ।

---

गाढेत्यादि । अत्र पीडयेति पदमनुमात्रं हर्षसम्मोहातिशयावेशं प्रतिपादयद् गुणतामापद्यते । अध्याहारेण वाक्यार्थप्रतीतिविलम्बेनापि प्रकृतरसपोषकत्वात् प्रयोजनवती लक्षणैवेत्यर्थः ।

एवं शोकादौ यथा—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमिहोत्तरेण ॥

इत्यत्र 'त्यक्तवानसि' इति क्रियापदमनुपात्तम्, अशक्यवक्तव्यत्वेन शोकातिशयपोषकत्वात् ।

तिष्ठेदित्यादि । प्रभावोऽन्तःकरणिकाऽविद्या । विधिर्दैवम् । न्यूनैरनुपात्तैः ।

विशेषबुद्धेरित्यादि । अत्र वितर्काख्याभावस्य न्यूनैः पदैः प्रकर्ष-निकर्षजननादनुभवत उत्तरा प्रतिपत्तिर्विरोधिनी । विरोधित्वञ्च भावा-भावविषयत्वेन तदभावव्याप्यविषयत्वेन च बाधादप्रामाण्यं बोधयति ।

अधिकपदं क्वचिद् गुणः । यथा--

यद्वञ्चनाहितमतिर्बहुचाटुगर्भे
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥४१३॥

अत्र 'विदन्ति' इति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

यथा वा--

वद वद जितः स शत्रुर्न हतो जल्पंश्च तव तवास्मीति ।
चित्रं चित्रमरोदीद्धा हेति परं मृते पुत्रे ॥४१४॥

इत्येवमादौ हर्षभयादियुक्ते वक्तरि ।

कथितपदं क्वचिद् गुणः, लाटानुप्रासे, अर्थान्तरसङ्क्रमितवाच्ये विहितस्यानुवाद्यत्वे च । क्रमेणोदाहरणम् ।

सितकरकररुचिरविभा विभाकराकारधरणिधरकीर्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥४१५॥

---

यद्वञ्चनेत्यादि । साधवः पण्डिताः । वेदनाभावाभावेन सार्वकालिकवेदनावगमः । वृथाकर्तुमित्यन्वयः ।

अभावाभावस्यानतिरिक्तत्वेन वेदनसम्बन्धस्य पूर्ववाक्यादवगतौ पुनरुपात्तं निराकाङ्क्षं लक्षणयाऽन्यवेदनाभावं बोधयतीत्याह—द्वितीयेत्यादि । तेन साधवो विदन्ति, नासाधव इत्यर्थः ।

दृष्टान्तयति—यथेति । अत्र प्रथमपादे हर्षस्य, द्वितीये भयस्य, तृतीये विस्मयस्य, चतुर्थे शोकस्य पोषणादधिकपदस्य गुणत्वम् । तदुक्तम्—

विषादे विस्मये हर्षे दैन्ये कोपेऽवधारणे ।
प्रसादनेऽनुकम्पायां द्विस्त्रिरुक्तं न दुष्यति ॥

इति समाजात् कथितपदत्वेऽपि न क्षतिः ।

सितकरेत्यादि । विभाकरः सूर्यः । धरणिधरेति सम्बुद्धिः । पौरुषमेव कमलमधिष्ठानम् आश्रयः, सा लक्ष्मीरित्यर्थः ।

ताला जाअंति गुणा जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥४१६॥

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥४१७॥

---

अत्र लाटानुप्रासनिर्वाहाद् विच्छित्तिः ।

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ।

अत्र द्वितीयकमलपदमुत्कर्षबोधकम् । रविकिरणानुग्रहेण कमलानि यथोत्कृष्टानि, तथा सहृदयैर्गृह्यमाणा गुणा इत्यर्थान्तरसंक्रमितवाच्यलक्षणासाध्या विच्छित्तिः । कमलान्युत्कृष्टानीति मुख्यप्रयोगात् तदप्रतीतेः ।

ननु तटघोषान्वयपरे 'गङ्गायां गङ्गा' इत्यत्रात्यन्ततिरस्कृतवाच्येऽपि विशेषावगमसम्भवे विशेषे प्रतिप्रसवोऽनुचित इति चेन्न, घोषपदोपादानेऽपि विशेषप्रतिपत्तिसम्भवेन पौनरुक्त्यस्याकिञ्चित्करत्वात् ।

जितेन्द्रियेत्यादि । अनुरज्यते अनुरक्तः स्यात् ।

विनयगुणप्रकर्षजनानुरागाणां पूर्वपूर्वत्रोद्देश्यानां परत्र प्रतिनिर्देश्यता । तत एव विवक्षितार्थसिद्धिः ।

अत्र द्विःप्रयोगाभावे तत्पदानामुपादाने विनयकारणविनयबाधकप्राप्त्यनुरक्तीनां विधेयतया प्रधानानामेवानुकर्षः स्यात् । न तु विधेयतावच्छेदकयोर्विनयजनानुरागयोः, न वा गुणप्रकर्षस्य, तेषां विशेषणत्वेनानुवाद्यत्वेन चाप्राधान्यात् । तदः प्रधानपरामर्शकत्वनियमात् । एतेन सर्वनामप्रयोगे विवक्षितार्थसिद्धिः स्यादेव । पुनःप्रयोगात् केवलमनुप्रासकृता विच्छित्तिरिति मिश्रमतमपास्तम्, अप्रधानपरामर्शकत्वे तत्पदानामसामर्थ्याद् । विधेयानुवाद्यता प्रतिप्रसवलक्ष्यविजिज्ञासया अर्थहेतुश्च ।

यमकप्रतिप्रसवौचित्यमिति लाटानुप्रासाद्युपलक्षणमिति वदन्तः किञ्चिन्नादरणीयाः, तत्र कथितपदत्वाप्रसङ्गात् । तथाहि निरर्थकयोः पदत्वं नास्त्येव, अर्थप्रत्यायकस्यैव तत्त्वात् । सार्थकनिरर्थकयोश्च यमकस्वरूप-

पतत्प्रकर्षमपि क्वचिद् गुणः। यथोदाहृते 'प्रागप्राप्त' इत्यादौ' ॥४१८॥

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः। यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम्, अपि तु वाक्यान्तरमेव क्रियते। यथा अत्रैव 'प्रागप्राप्त'इत्यादौ ॥४१९॥

अपदस्थसमासं क्वचिद् गुणः। यथोदाहृते 'रक्ताशोक' इत्यादौ ॥४२०॥

---

ज्ञानादेवैकार्थत्वाभावतात्पर्यग्रहे अविवक्षितपूर्वप्रतीतार्थाभेदबोधनरूपदूषकताबीजानवतारात्, दोषस्याप्यनवतारेण प्रतिप्रसवानौचित्यात्।

यथोदाहृत इत्यादि। यत्र चतुर्थपादाभिधानेन क्रोधस्तत्र तथैव शब्दप्रयोग इत्यादिना व्याख्यातमेवेत्यर्थः।

यत्र न विशेषणेत्यादि। विशेषणस्य विशेष्यसाकाङ्क्षतया विशेष्यपदावृत्तिनैयत्येन तद्विलम्बेन विलम्बात्। वाक्यान्तरारम्भे पुनरङ्गाङ्गिभावेनाकाङ्क्षावैगुण्यविरहात्।

अर्थान्तरैकवाचकादिचतुर्णां नित्यदोषत्वेन तानपहाय अपदस्थसमासप्रतिप्रसवमाह—रक्ताशोकेत्यादि। अत्र नो दृष्टेत्यादिक्रोधोक्तिः, तस्य स्थानस्य परित्यागेन दीर्घसमासस्य ततोऽन्यत्र करणादस्थानगामिता स्थानौचित्यविवेचनाभावेन च क्रोधपरिपुष्टिः।

केचित्तु अभवन्मतयोगस्यापि क्वचिददुष्टता। यथा 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इत्यत्र। तथा हि कशिपुपदस्य स्वार्थपरत्वे पुंस्त्वान्वयो न स्यात् 'कशिपु त्वन्नमाच्छादनं द्वयम्' इत्यमरेण नपुंसकानुशासनात्। शब्दपरत्वे तु प्रख्यापनक्रियानुपपत्तिः, संज्ञिन एव संज्ञया व्यवह्रियमाणत्वात्। अदोषत्वं तु लक्षणया झटित्येव धर्मिप्रत्यायनात्। न च प्रयोजनाभावः, शब्दप्रसारस्यैव तत्त्वात्। एवं 'दशपूर्वं रथम्' इत्यादीष्वपीत्याहुः; तन्न, लक्षणया विवक्षितान्वयोपपत्तौ अभवन्मतयोगताविरहात्। लक्षणातः पूर्वमन्वयानुपपत्तेर्लक्षणोत्थापकत्वेनादोषत्वात्। अन्यथा सर्वत्रैव लाक्षणिके तत्प्रसङ्गात्। किञ्च लक्षणैव न स्यात्, विकल्पासहत्वात्। तथाहि असुरविशेषत्वेन लक्षणा हिरण्यपूर्वादि-

गर्भितं तथैव । यथा—

हुमि अवहत्थिअनेहो णिरङ्कुसो अह विवेअरहिओ वि ।
सिविणे वि तुमम्मि पुणो पत्तिहि भत्तिं ण पुलसिम्मि ॥४२१॥

अत्र प्रतीहीति मध्ये दृढप्रत्ययोत्पादनाय ।

एवमन्यदपि लक्ष्याल्लक्ष्यम् ।

---

शब्दवाच्यत्वेन वा ? नाद्यः, प्रख्यानक्रियाया द्विकर्मकत्वेन कर्मान्तराकाङ्क्षाया अनुवृत्तेः । नापरः, हिरण्यपूर्वकशिपुत्वेन ख्यातिविरहात् । हिरण्यकशिपुत्वेनैव प्रसिद्धेः । द्विरेफादिपदे तु निरूढलक्षणया जातिविशेषपुरस्कारेणैव प्रतीतिरिति न तत्र दोषः । तेनाभवन्मतयोगस्य नित्यदोषतैव ।

सङ्कीर्णस्यानित्यदोषत्वेन गर्भितप्रतिप्रसवमाह—गर्भितेत्यादि ।

तथैव गुण एव—

भवाम्यपहस्तितस्नेहो निरङ्कुशोऽथ विवेकरहितोऽपि ।
स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि ॥

रेहापाठे रेखा मर्यादा । तत्तिमिति पाठे चिन्ता । कामं प्रति यौवनस्योक्तिरियम् ।

अत्रेत्यादि । प्रतीहीति सत्यप्रतीतिपरम् । तेन स्वोक्तेरमिथ्यात्वप्रतिपादनया प्रतीहीत्यनेन शपथसमानशीलेन स्वकृद्विषयकरागदार्ढ्यावगमः, परत उपादाने तु प्राङ्मिथ्यात्वेन प्रतीते अस्याकिञ्चित्करत्वम्, प्रतीतत्वात् । तदाह—मध्य इति । त्वमित्यस्य नियताध्याहारेण वाक्यत्वमक्षतम् । 'परापकारनिरतैः' इत्यादौ तु प्रसिद्धार्थोपदेशान्नास्त्युपपत्त्यपेक्षेति तत्र निराकाङ्क्षतैवेति बोध्यम् । एवं 'धन्यासि या कथयसि' इत्यत्र 'शपामि' इत्यस्य गर्भितस्य गुणत्वमेव, अविदग्धगोष्ठ्यां शपथेनैव प्रत्यायनात् ।

लक्ष्यादिति । तेनास्मदप्रदर्शितेष्वपि लक्ष्येषु विवेचनीयम् । यथा—"पंथिअ ण एत्थ सत्थरमत्थि पत्थरत्थले गामे" इत्यत्र स्रस्तरव्याजेन पथिकेन स्रस्तरे प्रार्थिते सन्देहान्नायिकयापि तथैवोत्तरितमिति सन्दिग्धं न दोषः ।

न च 'ताणं गुणग्गहणाणम्' इत्यादौ वचनप्रक्रमभङ्गस्य गुणत्वेन तत्प्रतिप्रसववचनमनुचितमिति वाच्यम्, एकवचनेनैव प्रेमैकरूपत्वस्य

**व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।**
**कष्टकल्पनया व्यक्तिरनुभावविभावयोः ।।६०।।**
**प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।**
**अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ।।६१।।**
**अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ।**
**अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ।।६२।।**

स्वशब्दोपादानं व्यभिचारिणो यथा--

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायाऽस्तु वः ।।४२२।।

अत्र व्रीडादीनाम् ।

---

व्यञ्जनात्, प्रक्रमभङ्गस्याकिञ्चित्करत्वात् । अन्यथा द्विवचनोपादानेऽपि तत्प्रसङ्गात् ।

अक्रमामतपरार्थयोर्नित्यदोषत्वमेवेति रसदोषाणां गाढत्वेन रसप्रतीतौ पाश्चात्त्यत्वेन च परस्तानाह—व्यभिचारीत्यादि । वाच्यता ताटस्थ्यलक्षणया भावानां बोधन ब्रह्मपदवत् । लोके यथा गोप्यानां स्तनादीनां साक्षात्प्रकाशने नोपादेयता, तथाऽनुभावादिबहुव्यङ्ग्यत्वेन चमत्कारनिदानानां व्यभिचारिभावानां स्पष्टप्रकाशनेत्यर्थः ।

सव्रीडेत्यादि । नायकस्य प्रदर्शनाद् व्रीडा । मातङ्गचर्माम्बरदर्शनात् कारुण्यम्, विभावाभावेन शोकोद्रेकात् । अम्बरवासिनः कुतोऽत्र सम्भव इति चन्द्रदर्शनाद् विस्मयः । तस्य रसत्वमनिमिषत्वेन दर्शनमाधुर्योत्पादनात् । यद्वा दर्शनेच्छैव रसः, विस्मयश्च रसश्चेति विगृह्य पश्चात्समासः । अन्यस्त्रीसंबन्धादीर्ष्या; मणिस्थाने कपालदर्शनाद् दैन्यं प्रविष्टानि । निर्गमेणोत्करोक्तिः । एतयोर्दाम्पत्ये दृष्टिसङ्गमयोरपि तथा जातम्, तदाह—प्रणयिनीति । शिवाय कल्याणाय ।

'व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनी ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे,
इत्यादि तु युक्तम् ।

रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम् । क्रमेणोदाहरणम्—

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः॥४२३॥

आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिराममूर्तिम् ।
पश्यैष बाल्यमतिवृत्य विवर्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥४२४॥

स्थायिनो यथा—

सम्प्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥४२५॥

अत्रोत्साहस्य ।

---

महादेवार्थं च स्वशब्दानुपादानेऽनुभावादिभिः प्रत्यायने स्यादेव पूर्णो रसः । तदाह—व्यानम्रेत्यादि ।

अत्र हि व्रीडादीनामनुभावादिमुखेन प्रत्यायनम् । उभयसमाजे तु क्वचिद् दोषत्वम्, क्वचन गुणत्वमिति वक्ष्यामः ।

तामित्यादि । रसः शृङ्गारः । विकार आन्तर इति कृते न दोषः ।

आलोक्येत्यादि । अनुरागस्तत्कार्यं पाण्डुता, अतिवृत्य अतिक्रम्य, विवर्तमानः पुलककटाक्षादिभिश्चेष्टमानः, तरङ्गितमविच्छेदारम्भम् ।

संप्रहारे युद्धे, प्रहरणैरस्त्रैः । प्रमोदपाठे न दोषः । एवम् 'अजायत रतिस्तस्यास्त्वयि लोचनगोचरे' इत्यप्युदाहार्यम् ।

कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नवयौवना सा ॥४२६॥

अत्रोद्दीपनालम्बरूपाः शृङ्गारयोग्या विभावा अनुभाव-पर्यवसायिनः स्थिता इति कष्टकल्पना ।

परिहरति रतिं मतिं लुनीते
स्खलति भृशं परिवर्तते च भूयः ।
इति बत विषमा दशाऽस्य देहं
परिभवति प्रसभं किमत्र कुर्मः ॥४२७॥

अत्र रतिपरिहारादीनामनुभावानां करुणादावपि सम्भवात् कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः ।

---

कर्पूरेत्यादि । शिशिररोचिषि चन्द्रे । शृङ्गारयोग्यो विभावाश्चन्द्रो नायको नायिका च । अनुभावपर्यवसायिनः पर्यवसानेन विलम्बेनानुभावे बोधकाः, न तु झटित्याक्षेपकाः । चन्द्रोदये यूनोः परस्परदर्शनेन विकारो भवत्येवेति प्रतिसन्धानेनैव प्रत्यायका इत्यर्थः । न च स्तनोन्नमनव्यञ्जन-मेवानुभावः, तस्य दर्शनकार्यत्वेनाप्रतीतेः ।

परिहरतीत्यादि । वस्तुनि स्पृहा रतिः । मतिः शास्त्रेषु निष्ठा । परिहरति त्यजति, विपर्येति, परिवर्तते विशेषदर्शी भवति । अत एव दशा समानं भवति, विशेषदर्शनाभ्यां सुखदुःखदायित्वात् ।

अत्रेति । करुणादावित्यादिपदाद् भयानकबीभत्सपरिग्रहः । संशये-नैकतरस्यापि न निश्चयः । यत्नतः प्रतिपाद्यः प्रकरणाद्यनु-सन्धानविलम्बगम्यः ।

प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥४२८॥

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी उपात्तः ।

णिहुअरमणम्मि लोअणपहम्पि पडिए गुरुअणमज्झम्मि ।
सअलपरिहारहिअआ वणगमणं एव्व महइ वहू ॥४२९॥

अत्र सकलपरिहारवनगमने शान्तानुभावौ । इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेद् न दोषः ।

दीप्तिः पुनः पुनः, यथा कुमारसम्भवे रतिविलापे ।

प्रसाद इत्यादि । प्रत्येतुं प्रत्याययितुम् । कालहरिणोऽस्थिरत्वात् । कालास्थैर्येण रतजीवितादीनामप्यस्थिरताय अनुपादेयत्वमित्याह— अनित्यतेत्यादि । तदुपादानमेव कथमित्यत आह—तत्प्रकाशित इत्यादि । नित्यताप्रकाशनप्रकाशितत्वेन निर्वेदस्य शृङ्गारप्रतिकूलता । प्रकारान्तरप्रकाशितत्वे पुनरनुकूलतैव ।

अनुभावप्रातिकूल्यमुदाहरति—

निभृतरमणे लोचनपथे पतिते गुरुजनमध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥

शृङ्गारानुभावत्वोपायतामाह—इन्धनेत्यादि । न च निभृतरमण इत्यादि निश्चायकम्, तत्कर्मणस्तदानीमनौचित्यप्रतिभासेन वैराग्यहेतुत्वसम्भवात् ।

पुनः पुनर्दीप्तिर्विच्छित्ति । विच्छित्तिग्रहणं वेद्यान्तरसम्बन्धेन धाराया विच्छेदात् । प्रबन्ध एव तथा सम्भवतीत्याह—रतिविलाप इति । अत्र स्वसामग्रीलब्धपरिपोषस्यापि करुणस्य नाऽवसरः, केवलं नाटकनिर्वाहहेतोः सर्वरससम्पादनेच्छया तदुपादानम् । तदुक्तं नाटकं प्रकृत्य—

एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे·················· ॥ इत्यादि ।

अकाण्डे प्रथनं यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम् ।

अकाण्डे छेदो यथा वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामि' इति राघवस्योक्तौ ।

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनम्, यथा हयग्रीववधे हयग्रीवस्य ।

अङ्गिनोऽननुसन्धानम्, यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः ।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च, वीररौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्त–धीरोद्धत–धीरप्रशान्ताः,

---

छेदो विच्छेदः । धाराधिरूढे धारावाहिनि । कङ्कणमोचनाय विवाहदशमदिवसीयोत्सवाय ।

हयग्रीवस्य जलकेलिवनबिहाररतोत्सवादेर्नायकापेक्षया विस्तरेण वर्णनं हयग्रीवस्य नायकत्वमेव प्रत्याययति, न प्रतिनायकत्वमिति दोषः ।

अङ्गिनो भावस्याननुसन्धानं प्रकरणान्तरेण स्थगनम् । बाभ्रव्यसिंहकेश्वरकञ्चुकिन आगमनकाले विजयवर्मविजयवृत्तश्रवणप्रसङ्गेन सागरिकास्मरणव्यवधिः । तेन नाटिकाप्रतिपाद्यश्शृङ्गाररसो विच्छिन्नप्रायः स्यादिति ।

दिव्याः स्वर्गिणः श्रीकृष्णादयः, अदिव्या मर्त्या युधिष्ठिरादयः । दिव्यादिव्या देवत्वेऽप्यात्मनि नराभिमानिनः श्रीरामचन्द्रादयः । धीरोदात्तेत्यादि ।

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥

अविकत्थनो नात्मश्लाघी । निगूढमानो विनयप्रच्छन्नगर्वः ।

मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः ।
आत्मश्लाघानिरतो धीरो धीरोद्धतः कथितः ॥
निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ।
सामान्यगुणैर्युक्तो द्विजादिको धीरशान्तः स्यात् ॥

उत्तमाधममध्यमाश्च । तत्र रतिहासशोकाद्भुतानि अदिव्योत्तमप्रकृतिवद् दिव्येष्वपि । किन्तु रतिः सम्भोगश्रृङ्गाररूपा, उत्तमदेवताविषया न वर्णनीया । तद्वर्णनं हि पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम् ।

क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ।।४३०।।

इत्युक्तवद् भ्रुकुटयादिविकारवर्जितः क्रोधः सद्यः फलप्रदः, स्वर्गपातालगगनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव । अदिव्येषु तु यावदवदानं प्रसिद्धमुचितं वा तावदेवोपनिबद्धव्यम् । अधिकं तु निबध्यमानमसत्यप्रतिभासनं नायकवद्वर्तितव्यम्, न प्रतिनायकवदित्युपदेशेन पर्यवस्येत् । दिव्यादिव्येषु उभयथाऽपि ।

---

गुणानामुत्कर्षापकर्षतदुभयाभावैरुत्तमाधममध्यमत्वानि । तदुक्तम्—'गुणतश्चोत्तमादयः' इति । उक्तासु प्रकृतिषु विपर्ययाभिधानाय तदौचित्यमनुवदति—तत्रेत्यादि ।

रतौ विशेषमाह—सम्भोगेति । सम्भोगश्चुम्बनालिङ्गनादिः, न पुनरन्योन्यालोकनम्, तस्य व्रीडातङ्कदायिताविरहात् । उत्तमश्च देवता चेति द्वन्द्वः । तेनादिव्योत्तमेष्वपि सम्भोगवर्णननिषेधः । ततश्च वर्णनीयोत्तमदिव्यनायकचरितमये नाटके तत्सम्भोगवर्णने व्रीडातङ्कादिः स्यादिति न तद्वर्णनमुचितमिति ध्वनिकारोक्तेन संवादः । केचित्तु जुगुप्साऽप्यदिव्येष्वेवेत्याहुः ।

क्रोधादौ विशेषमाह—क्रोधमित्यादि । त्रासात् संहारस्य द्विरुक्तिः । मरुतां देवानाम् । नयतीति नेत्रम् । माद्यतीति मदनः । मत्तस्यैवंदशौचित्यम् ।

नन्वेवं कथमदिव्यस्य हनूमतः समुद्रतरणमित्यत आह—अदिव्येषु त्वित्यादि । अवदानं वृत्तं कर्म । तस्याप्रसिद्धस्य वर्णने सत्यप्रतिभानं न स्यादित्याह—प्रसिद्धमिति ।

एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामप्यन्यथावर्णनं विपर्ययः । 'तत्रभवन्' 'भगवन्' इत्युत्तमेना न अधमेन मुनिप्रभृतौ न राजादौ, भट्टारकेति परमेश्वरेति च राजादौ, न मुनिप्रभृतौ, प्रकृतिविपर्ययापत्तेर्वाच्यम् ।

एवं देशकालवयोजात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबद्धव्यम् ।

अनङ्गस्य रसानुपकारकस्य वर्णनम् । यथा—कर्पूरमञ्जर्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य वन्दिवर्णितस्य राज्ञा प्रशंसनम् ।

'ईदृशाः' इति । नायिकापादप्रहारादिन । नायककोपादिवर्णनम् ।

उक्तं हि ध्वनिकृता—

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा ।।इति।।

---

तदपि प्रकृतानुपयोगि न वाच्यमित्याह-–उचितमिति । तेनौचित्येन जीवानां सत्यस्याप्युत्प्रेक्षणीयार्थस्य वर्णनेन दोषः । उभयथा दिव्यादिव्यौचित्येन । अन्यथावर्णनमेकस्यान्यचरितकथनम् ।

भाषौचित्यमाह-–तत्रभवन्नित्यादि । उत्तमेन वाच्यम्, नाधमेनेत्यन्वयः । विषयविवेकमाह-–मुनीत्यादि ।

एवमित्यादि । दिव्यमानुषवाग्वेषादि देशानुचितम् । वसन्ते मेघादिकालानुचितम्, जरायां सम्भोगादिवयोऽनुचितम् । नायिकायाः स्वाभिप्रायप्रकटनं जात्यनुचितम् । आदिना विरहिणीनां नेपथ्यवर्णनमवस्थानुचितम् ।

अनङ्गस्य प्रकृतरसानुपकारकस्यानादरः, वन्दिवर्णितप्रशंसया तिरोधानम् । प्रशंसा च न प्रकृतोपयोगिनी । उपनिषद् रहस्यभागः ।

इदानीं क्वचिददोषा अप्येते इत्युच्यन्ते ।

**न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित् ।**

यथा––

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ।।४३१।।

अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् । अत एव 'दूरादुत्सुकम्' इत्यादौ व्रीडाप्रेमाद्यनुभावानां विवलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसा प्रसरणादिरूपस्य तथाप्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम् ।

**सञ्चार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ।। ६३ ।।**

बाध्यत्वेनोक्तिर्न परमदोषः, यावत्प्रकृतरसपरिपोषकृत् । यथा 'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्' इत्यादौ ।। ४३२ ।।

---

प्रतिप्रसवमाह––इदानीमित्यादि । क्वचिदिति । यत्र विभावादिसाधारण्यान्न विशदप्रतीतिः, यत्र वाऽनुभावादिकृतपरिपुष्टिः प्रकृतरसविरोधिनी तत्रेत्यर्थः ।

सहसोपसरणारम्भ औत्सुक्यानुभावस्त्वरायुक्तरूपः, तस्य भयादपि सम्भावनविशेषप्रत्यायक इत्यर्थः ।

सञ्चार्यादेरित्यादि । बाध्यस्येति । नानुवादमात्रमित्याह––बाध्यत्वेनेति । तथा निर्देष्टव्यं यथा बाध्यतावगमः स्यादित्यर्थः ।

गुणपदं विवेचयति––न परमिति ।

क्वाकार्यमित्यादि । अत्र वितर्कमतिशङ्काधृतीनां शान्तसञ्चारिणां शृङ्गारस्य परिपन्थिनामपि तत्परिपोषकता तानुपमर्द्य चिन्तायां विश्रान्तेः ।

अत्र वितर्कादिषु कृतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः।

पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ ४३३॥

इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धम्—

सत्यं मनोरमा कामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥४३४॥

इत्यत्राद्यमर्धं बाध्यत्वेनैवोक्तम्।

जीवितादपि अधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाति, न पुनः शृङ्गारस्यात्र प्रतीतिः, तदङ्गाप्रतिपत्तेः।

---

एवं शृङ्गारस्य परिपुष्टिर्विपक्षजयपूर्वकं राज्यलाभस्येव। तदाह—वितर्कादिषु कृतेष्वित्यादि। प्रकृतरसो भावशबलः।

नन्वेवं बाध्यतानवगमे विरुद्धस्योक्तिर्दोषायास्तु इत्याह—पाण्डुक्षामेत्यादि। शरीरान्तरे चिकित्स्यं क्षेत्रीयम्। अन्तोऽन्तरीणं रोगविशेषणम्। आवेदयति प्रकाशयति। साधारणत्वं साजात्यं न विरुद्धमिति कार्यवैलक्षण्यमेव विरोधः। स च प्रकृते नास्तीत्यर्थः।

शृङ्गारकरुणयोर्द्वयोरपि एककार्यपाण्डुतादिजनकत्वाद् बाध्यताप्रतीतावेव गुणत्वमिति द्रढयितुं लक्ष्यान्तरमाह—सत्यं मनोरमा कामा इत्यादि। काम्यन्त इति कामा विषयाः। रामा इत्यपि पाठः। अपाङ्गभङ्गः कटाक्षः। सामान्यवचनेन समासः। हिरवधारणे। बाध्यत्वेन बाध्यत्वमुद्दिश्य विश्रान्त्यभावः। सत्येव जीवने कामादीनां रमणीयत्वम्, तस्यैव चञ्चलतास्थापनया किं कृतममीषां रमणीयत्वमिति कामादीनां बाध्यतावगमः।

नन्वङ्गनापाङ्गभङ्गस्योपादेयत्वावगतौ कथं शान्तस्य प्राधान्यमित्याह—जीवितादित्यादि। अपिर्भिन्नक्रमेऽधिकमपीत्यर्थः। इतिना अधिकास्थिरत्वपरामर्श इत्यधिकास्थिरत्वेन प्रसिद्धौ योऽयं भङ्गुरोऽपाङ्गः, तस्य यदुपादानत्वं तन्नोपात्तम्, तदुपमानत्वेन सामान्यवचनस्यास्य समस्ततयोपादानं-

न च विनेयोन्मुखीकरणमत्र परिहासः, शान्त-शृङ्गारयोर्नैरन्तर्यस्याभावात्। नापि काव्यशोभाकरणम्, रसान्तरादनुप्रासमात्राद् वा तथाभावात्।

**आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः।**
**रसान्तरेणान्तरितो नैरन्तर्येण यो रसः॥ ६४॥**

वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः। शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरमन्तरे कार्यम्।

---

न स्यात्, उपमानेनैव सामान्यवचनसमासात्। शान्तमेवेत्यादि। यथा अपाङ्गभङ्गोऽस्थिरः, तथा जीवितमिति जीविते क्षणस्थायित्वप्रत्यायनेनेत्यर्थः। तेन बाध्यत्वस्य स्वस्मिन् विश्रान्त्यलाभस्याङ्गत्वापादनम्। परस्य विश्रान्तिमवरुध्य स्वस्मिन् विश्रान्तेर्बाधकतेति भावः।

ननु शान्तशृङ्गारयोर्द्वयोरपि रसत्वेन बाधने किं विनिगमकमत आह—न पुनरित्यादि। शृङ्गारयोग्यविभावाद्यकरणादित्यर्थः।

अथ विनेयानां सुकुमारादिजातीनां राजपुत्राणां शृङ्गारलम्पटानां प्रवृत्त्यन्यथाऽनुपपत्त्याऽनुभूयमानायाः काव्यशोभायाः। शृङ्गारैकत्वनिर्वाह्यत्वेन चावश्यं शृङ्गाराङ्गानामाक्षेपो वक्तव्य इति पूर्वपक्षद्वयं निराकरोति—न चेति। नापीति। रसान्तराव्यवधानेन प्रतीतिर्नैरन्तर्यम्, तेन यस्याङ्गानि प्रतीयन्ते स एव रस इति शान्त एव रसः, न शृङ्गारः।

विनेयोन्मुखत्वे काव्यशोभायां चोपपादकमाह—रसान्तरादित्यादि। एतयोरुपपत्तिरास्वादमात्रादेव, न त्वास्वादविशेषात्। तदभावस्थले तदुभयाभावप्रसङ्गात्। आस्वादमात्रं तु प्रकृते शान्तादेवाक्षतमिति समाधानार्थः। अनुप्रासमात्रादित्यनतिरिक्तरसवादिनां साम्प्रदायिकानां मते। मात्रपदेन विभावादिव्यङ्ग्यरसादिव्यवच्छेदः।

भावविरोधं परिहरति—आश्रयैक्येत्यादि। विरोधो द्विधा—दैशिकः कालिकश्च।

आद्यं समाधत्ते—भिन्नसंश्रय इति। द्वितीयं रसान्तरेणेति।

भयानकस्य प्रतिपक्षगतत्वेनोपन्यासे नायकवीररसपरिपुष्टिः। रसान्तरस्य सम्भवाद् व्यवधिः।

यथा—नागानन्दे शान्तस्य जीमूतवाहनस्य "अहो गीतम्, अहो वादित्रम्" इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः ।

न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते । यथा—

भूरेणुदिग्धान् नवपरिजातमालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः ।।
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ।।
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानान् ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ।।

अत्र बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः ।

---

जीमूतवाहनस्य परमशान्तस्य तपोभङ्गार्थमिन्द्रेण प्रेषितानामप्सरसां वादित्रगीतेन विस्मयोद्बोधाददद्भुतो रसः, तदनन्तरं मलयवत्यां रत्युद्बोधाच्छृङ्गारः । तदाह—अहो गीतेत्यादि ।

न परमित्यादि । प्रबन्धो महाकाव्यम् ।

बाहुमध्यं वक्षः । शिवाः शृगाल्यः । अन्यापनयनशङ्कया स्फुरणम् । क्रव्यभुजं मांसाशिनम् । सुगन्धित्वेन शैत्यस्य प्रतीतिः, धर्मयोरेकनिर्देशेऽन्यसंवित्साहचर्यनियमात् । दुकूलं वासोविशेषः ।

निर्दिश्यमानान् दर्शितान् ।

अत्रेति । साहसनिपातजन्यस्वर्गलाभरूपानुभावादेर्वीररसाक्षेपकत्वम् । न च प्राकरणिकत्वाद् वीरस्य प्राधान्यम्, एतद्वाक्याद् बीभत्सशृङ्गारसामग्र्योरेवोत्कटत्वेन प्रतीयमानत्वात् । वीरसामग्र्याः पुनराक्षिप्यमाणत्वेनानुत्कटत्वात् । अत्र हि शृङ्गारबीभत्ससामग्रीतश्चित्रो रस इति सम्प्रदायः ।

**स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः ।**
**अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ।। ६५ ।।**

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ।।

एतद् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ । अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति ।

दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलकैर्भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ।। ४३८ ।।

---

इह हि रसानां परस्परविरोधः क्वचिदाश्रयैक्येन, क्वचिदालम्बनैक्येन क्वचिन्नैरन्तर्येण । तत्रालम्बनैक्येन वीरशृङ्गारयोः । हास्यरौद्रबीभत्सैः सम्भोगस्य । वीरकरुणरौद्रैर्विप्रलम्भस्य । वीरस्याद्भुतरौद्राभ्यां सर्वथैवाविरोधः । शृङ्गारस्याद्भुतेन, भयानकस्य बीभत्सेनेति । तेन—

कपोले जानक्याः करिकलभदन्तद्युतिमुखि
स्मरस्मेरं गण्डो डुमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ।।

इत्यत्र वीरशृङ्गारयो रजनिचरसेना-जानकीरूपालम्बनभेदान्न विरोधः ।

अविरोधस्य प्रकारान्तरमाह—स्मर्यमाण इत्यादि । अङ्गिन्युत्कृष्यमाणे । अङ्गत्वमुत्कर्षकत्वम् ।

क्रमेणोदाहरणत्रयम्—अयमित्यादि ।

अत्र प्रकृतत्वेन करुणोऽङ्गी । शृङ्गारस्याप्रकृतत्वेन हीनरसतया अङ्गत्वम् ।

ननु कथमत्र शृङ्गारोऽङ्गम् ? आलम्बनोच्छेदसामग्र्यभावादित्याह—अत्रेत्यादि ।

करजा नखाः । विपाटितानि विदारितानि । रक्तं रुधिरमनुरक्तश्च । मृगराजः सिंहः, मृग इति पुञ्जातिविशेषो नृपतिः । अपिर्विरोधे,

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि तथा जिनस्य। यथा वा परः श्रृङ्गारी तदवलोकनात् सस्पृहः, तद्वदेतादृशो मुनय इति साम्यविवक्षा ।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः ।
भीत्या भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ।। ४३९ ।।

---

मुनीनां गतस्पृहाणामपि तदुद्रेकात् । प्रसूय बुभुक्षया निजापत्यमेव भोक्तुमारभमाणायै सिंहिकायै तदपत्यरक्षणाय स्वाङ्गमर्पितवन्तं जिनं प्रति कस्यचिदुक्तिरियम् ।

अत्र दयावीरस्यानुभावविशेषः । श्रृङ्गार उपमानभावेनोत्कर्षकः ।

न च दयावीरस्य विस्मयोत्थापकत्वादङ्गत्वं प्राप्तयोरेवोदाहरणत्वेन तृतीयप्रकारासम्भव इति वाच्यम्, ब्राह्मणस्य सन्ध्यावन्दनमिव बौद्धानां दयालुत्वं स्वाभाविकमिति दयाया विस्मयानुत्थापकत्वात् लोकातिक्रान्तत्वा-भावाज्जिनविषयकरतावेव न प्राधान्यम्, तन्माहात्म्योपनिबन्धविरहात् । दयामात्रप्रतीतौ तु दयावीरत्वाद्भुतविवक्षया प्रकारान्तरत्वमिति तु मिश्राः ।

सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविदंशितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे ।।

इति लक्ष्यं रौद्रस्य प्रकरणगम्यवीराङ्गतेत्यङ्गिनि वीरे रौद्रश्रृङ्गारयो-रङ्गतया वक्ष्यमाणभेदात् ।

आस्तृतैरुत्पन्नैश्च दर्भैः स्थलीनां सदर्भता । यज्ञधूमेन भयेन च बाष्पाम्बुपातः । अग्निशब्दात् परितःशब्दयोगे द्वितीया । उद्यद्विवाहा इवेति । विवाहे लाजाहोमे भर्तृकरधृतकराणां नारीणां सदर्भस्थल्यां वह्निप्रदक्षिणम् ।

अत्र चाटुके राजविषया रतिः प्रतीयते । तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः ।

यथा——

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥४४०॥

इत्यत्र एहीति क्रीडन्ति गच्छेति क्रीडन्तीति क्रीडनापेक्षयोरागमनगमनयोर्न विरोधः ।

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥४४१॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम्, तस्य तु शृङ्गारः, तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव । अथवा प्राग् यथा कामुक आचरति स्म, तथा शराग्निरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते ।

---

अत्रेति । प्रतिपक्षस्य वचनाश्रयणेन माहात्म्येन च राजनि रतिरुज्जीवतीति भावः । परस्परविरुद्धयोरपि सामन्तयोर्नृपकार्यसम्पादनायेवेत्यर्थः ।

बहूनामङ्गभावसम्भवेन सूत्रे द्वित्वसंख्याया अतन्त्रत्वं दर्शयति—क्षिप्त इत्यादि । हस्तावलग्नः क्षिप्त इति योज्यम् । एवमुत्तरत्रापि व्युत्क्रमेण संबन्धः पुरस्करणीयः ।

अङ्गाङ्गिभावं विवेचयति । प्रभावातिशयेन भावाङ्गस्याद्भुतस्यावगमः । न विश्रान्तिर्भावाङ्गत्वात् । अथवेति । प्रथमपक्षे एकस्य द्वयम्, परपक्षे च विशिष्टवैशिष्ट्यभाव इति पक्षयोर्भेदः ।

उक्तं हि—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।

प्रधानस्योपकारे हि तथा भूयसि वर्तते ।। इति ।

प्राक् प्रतिपादितस्य रसस्य रसान्तरेण न विरोधः, नाप्यङ्गाङ्गिभावो भवतीति रसशब्देनात्र स्थायिभाव उपलक्ष्यते ।

**इति काव्यप्रकाशे दोषदर्शनो नाम**
**सप्तम उल्लासः ।। ७ ।।**



---

उक्तं हीत्यादि । गुणो विशेषणम् । संस्कारोऽन्येन परिपुष्टिः, तथा स्वसंस्कारेण ।

ननु पूर्णघनानन्दानां स्वमात्रविश्रान्तानां रसानां कथं विरोधः, यौगपद्यविरहादिति आह—प्रागित्यादि । प्रतिपादितस्य विगलितवेद्यान्तरत्वेन व्यवस्थापितस्य । न च रसशब्देनाधिष्ठानलक्षणया 'अयं स रशनोत्कर्षी' इत्यादिषु स्थायित्वाभावात् कथं स्थायिभावलक्षणेति वाच्यम्, सामाजिकनिष्ठालौकिकरतावेव स्थायित्वसत्त्वात् ।

व्यरचि विवेचनमेतद् दोषाणामित्यलब्धदोषाणाम् ।
एतन्निधाय हृदये सदैव सदया भवन्तु धीमन्तः ।।

**इति परमानन्दचक्रवर्तिकृतायां काव्यप्रकाश-**
**विस्तारिकायां दोषनिरूपण**
**नाम सप्तम उल्लासः ।। ७ ।।**



# अष्टम उल्लासः

एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥६६॥**

आत्मन एव हि यथा शौर्यादयो नाकारस्य, तथा रसस्यैव माधुर्यादयो गुणाः, न वर्णानाम्। क्वचित् तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनात्, 'आकार एवास्य शूरः'

---

॥ श्रीजगज्जनन्यै नमः ॥

'दोषानुक्त्वा' इत्यवसरसङ्गतिसूचनम् । अत्र केचिद् गुणालङ्काराणां नास्ति भेदः, काव्योत्कर्षकत्वाविशेषादित्याहुः, तान् निराचष्टे—गुणालङ्कारविवेक इति । विवेको विभागः । स च परस्परवैधर्म्यनिरूपणाधीन इत्याह—ये रसस्येति । रसस्य धर्मा गुणाः, ते चोत्कर्षरूपाः स्वव्यञ्जकस्य काव्यस्योत्कर्षकाश्च । तदाह—उत्कर्षहेतव इति । तेन रसदोषव्यवच्छेदः, तस्यापकर्षरूपस्य रसधर्मस्य स्वव्यञ्जककाव्यापकर्षकत्वात् । उत्कर्षहेतुष्वलङ्कारेष्वतिप्रसङ्गवारणायाह—अचलेति । अचला नियता स्थितिर्येषां ते तथा । रसविशेषनियतविशेषा इत्यर्थः । शृङ्गारादौ माधुर्यस्य वीरादावोजसः, प्रसादस्य सर्वात्मनि नियतत्वात्, अलङ्काराणां तु सर्वेषामेव सर्वरसोत्कर्षकत्वाद् नीरसेऽपि सत्त्वाद् व्यभिचाराच्च । अत एव सर्वालङ्काराणां स्वेच्छया प्रयोगः ।

ननु 'अयं स रशनोत्कर्षी' इत्यादौ माधुर्यव्यञ्जकवर्णविरहेणोत्कर्षमनासाद्य करुणाङ्गतां प्राप्तवति शृङ्गारे माधुर्यस्य चलस्थितावव्याप्तिरित्यत आह—अङ्गिन इति । अङ्गिन्येव स्थितिनियमः, न त्वङ्ग इत्यर्थः ।

शौर्यादिसमुचितस्य तद्व्यञ्जकस्य आकारं शरीरम् । महत्त्वमारोहपारणाहवत्त्वम् । आकार एव, न त्वात्मनि, विभोर्व्यवहाराविषयत्वात् ।

इत्यादेर्व्यवहारादन्यत्राशूरेऽपि विततांकृतित्वमात्रेण 'शूरः' इति क्वापि शूरेऽपि मूर्तिलाघवमात्रेण 'अशूरः' इति अविश्रान्तप्रतीतयो यथा व्यवहरन्ति, तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण माधुर्यादिमधुरादिरसोपकरणानां तेषामसौकुमार्यादेरमाधुर्यादि रसपर्यन्तविश्रान्तप्रतीतिबन्ध्या व्यवहरन्ति । अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते, न तु वर्णमात्राश्रयाः । यथैषां व्यञ्जकत्वं तथोदाहरिष्यते ।

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥ ६७ ॥**

---

अस्य व्यवहर्तुर्वितता स्थूला । मूर्तेः शरीरस्य लाघवमनतिस्थौल्यम् । विश्रान्ता । विषयादन्यत्राप्रसारिणी, तदन्या विश्रान्ता । एवं प्रतीतिर्येषां ते भ्रान्ता इत्यर्थः । मधुरादिरसोपकरणानां तद्व्यञ्जकत्वेनोपात्तानाम् । उपकारकाणामप्येष एकार्थः । तेषां वर्णानां माधुर्याद्यमाधुर्यादि च व्यवहरन्तीत्यन्वयः ।

रसपर्यन्तेति । रसस्य पर्यन्ते सीमायां विश्रान्ता, तदन्यत्राप्रसारिणी रसमर्यादाग्राहिणी प्रतीतिस्तया बन्ध्या तद्धीना । अत एव लौकिकगुणधर्मसाजात्याल्लक्षणं समर्थयन्ति—रसधर्मा इति ।

प्रमाणमुत्थापयति--समुचितैरिति । व्यञ्जकानामेव प्रमाणत्वमित्यर्थः ।

साम्प्रदायिकमतमाक्षिपति--न त्विति । वर्णमात्राश्रयत्वे व्यभिचारात् ।

ननु समुचितैरित्यनेन वर्णानां व्यञ्जकत्वमभिहितम्, तत्कथं व्यञ्जकत्वममीषामित्याह--एषामित्यादि । यथा व्यञ्जकत्वं तथेत्यर्थः ।

अयमाशयः—वर्णानां माधुर्यादिव्यञ्जकत्वेन तदाख्याय वक्ष्यामः ।

उपकुर्वन्तीति । तं रसं जातु कदाचित् । शब्दार्थाविगमद्वारेण तदुत्कृष्य उपकुर्वन्त्युत्कर्षयन्ति । तेन गुणव्यवच्छेदः, तेषां साक्षादुत्कर्षकत्वात् ।

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपकुर्वन्ति, ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽप्युपकारका हारादय इवालङ्काराः ।

यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः । क्वचित् तु सन्तमपि नोपकुर्वन्ति ।

यथाक्रममुदाहरणानि—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥४४२॥

इत्यादौ वाचकमुखेन,

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥४४३॥

---

वाचकवाच्येति । अतिशय उत्कर्षणम् । तत्पदेनाङ्गिपरामर्शः । तदाह—मुख्यमिति । स तु प्रकृते रस इत्याह—रसमिति । सन्तमित्यस्यार्थः सम्भविनमिति । इत्यपि गुणवैधर्म्यम्, तेषां रसैकधर्मत्वादमीषां पुनः शब्दार्थयोरपि वृत्तेः ।

यत्र त्विति । वैचित्र्यं शब्दानां सुश्रवत्वमर्थानामीषन्मनोहारिता । जातुचिदिति विवृणोति—क्वचित् तु सन्तमपीत्यादि । अत्राप्युक्तिवैचित्र्यम् ।

यथेति । उपकारकत्वानुपकारकत्वलक्ष्यप्रदर्शनायोपक्रमः । तत्र प्रथमकल्पमाह—अपसारयेत्यादि । घनसारः कर्पूरः ।

अत्र कोमलया वृत्त्यानुप्रासेन शब्दानामलङ्करणम् ।

अर्थोपकारद्वारतामाह—मन राग इति । रागो मनस्येव, कन्यकात्वेन व्यञ्जितुमशक्यत्वात् । तीव्रं विषं हालाहलम् । विसर्पति सर्वतः प्रसरति ।

इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः ।

चित्ते विहट्टदि ण टुट्टदि सा गुणेसुं ।
सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसु ॥
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे
झाणेण टुट्टदि चिरं तरुणी तरट्टी ॥ ४४ ॥

इत्यादौ वाचकमेव ।

---

विधुत उत्तेजितः । अत एव निर्धूमता । हिनस्त्यामर्दयति । गरीयान् सान्निपातिकः । इत इत इति बालाया मौग्ध्यादङ्गप्रदर्शनम् । तातः पिता न प्रभवति । नन्दनाय मत्प्रतिप्रसवात् । न चाम्बा, तया तत्र प्रतिबन्धनाचरणात् । न भवती मातृ-पितृसम्मतेऽर्थे सख्या अकिञ्चित्करत्वात् ।

माधवानुरक्ताया मालत्यास्तरङ्गिकां प्रतीयमुक्तिः ।

अत्र मालारूपकेण तीव्रविषादिधर्मं मनोरागे प्रत्याय्य तद्द्वारा विप्रलम्भ उत्कृष्यत इत्यर्थः । तदाह वाचकवाच्यमुखेनेति ।

रसस्यानुपकारकत्वे उक्तिवैचित्र्यम्, तस्यासतोऽनुपकारकत्वं गरीय इत्याह--चित्ते इत्यादि ।

चित्ते विघटते न त्रुट्यति सा गुणेषु शय्यासु लुठति विकसति दिङ्मुखेषु ।
वचने वर्तते प्रवर्तते काव्यबन्धे ध्यानेन त्रुट्यति चिरं तरुणी प्रगल्भा ॥

'तणुई' इति पाठे तन्वीत्यर्थः । चित्ते विघटते यन्मनसि वर्तते तदनुरूपं वाचं व्यवहरति । तथा गुणवत्ता न हीयते । भवद्दिदृक्षया दिक्षु प्रकाशते । वचने वर्ततेऽनवरतं प्रलपति । काव्यबन्धे भवद्वर्णनायाम् । ध्यानेन तव चिन्तया त्रुट्यति कृशा स्यात् ।

वाचकमेवेत्यनेन रसव्यवच्छेदः । अत्रौजोव्यञ्जकस्य परुषानुप्रासस्यातिमधुरे विप्रलम्भे नोपकारकत्वम् ।

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः।।४४५।।

इत्यादौ वाच्यमेव, न तु रसम् ।

---

मित्र इत्यादि । अत्र चक्रवाकगतो विप्रलम्भाभासो रसः । मित्रे सूर्ये एव, मित्रे सुहृदि । बद्धानने मुद्रितपद्मे एव, मौनिनि । क्रन्दत्सु शब्दायमानेषु । सारसः पक्षिभेदः । तस्य दयिता सारसी । वियोगिना सन्ध्यासमयोपस्थित-प्राणेश्वरीविच्छेदवता । बिसलता मृणालवल्ली ।

अत्रोत्प्रेक्ष्यते जीवस्य निर्गच्छतोऽर्गलेवेति । जीवस्य जीवनस्यैव जीविनः । निर्गमद्वारि तिर्यग्ग्राहिका निर्गमरोधिका स्थूलार्गलातत्त्वेन सम्भावना स्फुटैव । जीवनिर्गमरोधिकायां बिसलतायां जीवनिर्गमरोधिकाकुलत्व-मुत्प्रेक्षते ।

न च बिसलतायां जीवनिरोधकत्वमसिद्धम्, मृणालादीनां विरहप्रतीकारकत्वेन कविषु प्रसिद्धत्वात् । अत एव वियोगिनेत्युक्तम् ।

न च स्वयं प्रतीकारेण रागो हीयत इति वाच्यम्, तदुद्देशेन तेन तदनुपादानाद् भोक्तुमेव ग्रहणात्, वस्तुसामर्थ्येन कार्योत्पादनात् ।

नन्वेवं चेदुपमैवास्तु, मैवं जीवनिरोधकत्वस्य साधर्म्यस्योपमेयबिस-लतायामप्रतीतेः । उपमानतावच्छेदकत्वेनोपमाने एव तदवगमात् ।

स च समानधर्मसम्बन्ध उपमाने शब्द उपमेयेऽर्थ इति वाच्यम्, एकत्र शाब्दत्वेऽन्यत्रापि तदपेक्षणात्, शब्दाकाङ्क्षायाः शब्देन पूरणात्, उत्प्रेक्षायां तु सर्वथैव तस्यार्थत्वात् । एतेन बिसलता जीवं रोद्धुं न क्षमेति ग्रन्थ-व्याख्यायामुपमा ।

प्रकृते विप्रलम्भाभासेऽननुगुणोपमा जीवनरक्षणप्रयत्नेन रागस्य हीयमानत्वाद् जीवत्यागव्यवसायेनैव तत्परिपुष्टेरिति यन्मिश्रैरुक्तं तन्निरस्तम्, वक्तृसामर्थ्येनैव जीवनरक्षणम्, न तु तेन तदभिप्रायेणोपादानमित्युक्तत्वात् ।

अत्र बिसलता न जीवं रोद्धुं क्षमेति प्रकृताननुगुणोपमा।

एष एव च गुणालङ्कारप्रविभागः ।

एवं च "समवायवृत्त्या शौर्यादयः, संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः, ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैवैषां भेदः" इत्यभिधानमसत् ।

---

अत्र दीपिकाग्राहिणः प्रकृते रत्याख्ये भावे मित्रादिशब्दः श्लेषादिमूलातिशयोक्तिसमर्पितो न कश्चिदतिशयः स्फुरतीत्यलङ्कारस्य न रसोपकारकता।

अर्गलेत्युत्प्रेक्षायामुपमाभ्रान्तिं निराचष्टे—अत्रेति। उपमाङ्गीक्रियमाणा सती दोषावहा स्यात्। उपमीयतेऽनयेत्युपमा जीवनिरोधकता। प्रकृते उपमेये अननुगुणासम्भवाभावेन नानुकूल्यमाधत्त इत्याहुस्तन्न, मित्रस्य सुहृदः प्रतिकर्त्तुरभावेन विरहोद्रेकस्यानुभविकतयाऽतिशयोक्तेः प्रकृतोपकारकत्वात्। उपमेये बिसलतायां जीवरोधकत्वस्य प्रदर्शितत्वाच्च। तर्हि कथं ग्रन्थसङ्गतिरिति चेदुच्यते बिसं लतेवेति समासेन दीर्घत्वादिसाधर्म्येणोपमा प्रतीयते। बिसलता जीवं रोद्धुं न क्षमेति नहि लता सदृशं जीवं रोद्धुं क्षमते, लतायास्तद्धर्माभावात्, अतो बिसे प्रतीयमानं सादृश्यं प्रकृते जीवरोधनोपयोगि। प्रत्युत सदपि तत्र तन्निरोधीयत इति।

न च बिसलतेति रूपकम्, चक्रवाकास्वादनयोग्यत्वेन धर्मेण तद्बाधनाच्च लतायां तदभावादिति नवीनः पन्थाः।

प्रतिज्ञाफलमाह—एष एवेति। एवकारेण वाद्यन्तरव्यवच्छेदः।

अभेदवादिमतमुत्थाप्य दूषयति—एवं चेति। एवं प्रदर्शितवैधर्म्येण गड्डलिकाप्रवाहेण भेद इत्यभिधानमसदित्यर्थः।

लौकिकगुणालङ्कारयोर्भेदः सम्बन्धभेदप्रयोजकत्वेन विप्रतिपद्यते। काव्ये तु सम्बन्धभेदाभावान्न भेद इति पूर्वपक्षार्थः।

यदप्युक्तम् "काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः" इति, तदपि न युक्तम्, यतः किं समस्तैर्गुणैः काव्यव्यवहारः, उत कतिपयैः ? यदि समस्तैः, तत्कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्यात्मा ?

अथ कतिपयैः, ततः—

अद्रावत्र प्रज्वलत्यग्निरुच्चैः
प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ॥ ४४६ ॥

इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः ।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥ ४४७ ॥

---

ननु साक्षादुपकारकत्वमङ्गोपकारकद्वारा वाचकत्वमित्युपाधिद्वयं विभाजकं भवताभिहितम्, तच्च नोपपद्यते, उभयेषां शब्दार्थोपकारकत्वादुपकारे परं तादवस्थ्यादित्याह—यदप्युक्तमिति । विकल्प्य दूषयति—किमित्युतेति ।

अयमाशयः—रीतिरेव कथं तस्य आत्मा, गुणानामपि तथात्वात् । पदसंघटनात्मिका रीतिश्च त्रिधा—वैदर्भी पाञ्चाली गौडीया चेति । तत्र समग्रगुणा प्रथमा, असमग्रगुणापरा द्वयी । तेन रीतिधर्मा गुणाः शब्दार्थात्मकं काव्यं शोभयन्ति । तदाहितायाः शोभाया अलङ्कारैरतिशायनम् । ततश्च रीतित्वावच्छेदकैर्गुणैरेव काव्यव्यवहार इति भवन्मतपर्यवसानम् । तच्च नोपपद्यते, विकल्पासहत्वादित्याह—किं समस्तैरिति ।

अद्रावत्रेत्यादि । उच्चैरिति धूमेनान्वेति । अत्र गाढत्वादेरनुभवसिद्धत्वे काव्यत्वं स्यात् । तदाह—काव्यव्यवहारप्राप्तिरिति । स्यादिति शेषः ।

अथ गुणानां साकल्यमेव प्रयोजकम् । पानकरस इव खण्डादीनां तेषां समत्वे वैदर्भी । ओजःकान्त्योरुत्कटत्वे गौडीया । माधुर्यसौन्दर्ययोस्तथात्वे पाञ्चाली । प्रकृते तु श्लेषादीनामभावेन गुणा साकल्याभावान्न काव्यत्वमित्याह—स्वर्गप्राप्तिरित्यादि । अनेन मानुषेण, न तु दिव्येन ।

अत्र विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्तकौ ।

इदानीं गुणानां भेदमाह––

**माधुर्य्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।**

एषां क्रमेण लक्षणमाह––

**आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥ ६८ ॥**

---

एतद्देहः स्वर्गप्राप्त्यभावे कारणम् । तस्मिन् सति तदभावाद् विशेषोक्तिः । अधररसस्य सुधात आधिक्येन व्यतिरेकः । तदाह—अत्रेति । अत्रोक्तप्रकारत्रयात्मकरीतित्रयाभावेऽप्यलङ्काराभ्यामेव सर्वेषां काव्यव्यवहारः, स न स्यात् । रत्यभावेन तद्विशेषणीभूतानां गुणानामभावात् तदाहितशोभाया विरहे तदतिशयकत्वाभावादनयोरलङ्कारताभावप्रसङ्गात् । अस्मन्मते तु विभावादिसत्त्वासत्त्वप्रयुक्तौ रसस्यात्मनो भावाभावौ । स्वर्गप्राप्तिरित्यत्रापि च काव्याकाव्यप्रयोजकाविति न काचिदनुपपत्तिः । गुणनिरपेक्षौ तदनधीनौ, तेन गुणाहितशोभातिशायकत्वमलङ्काराणामित्यभिधानमसदित्यर्थः ।

गुणानां सामान्यलक्षणानन्तरं विशेषलक्षणे निर्वक्तव्ये तत्सौकर्यायोद्देशमाह—माधुर्येत्यादि । आख्यापदं परमतेन सह संज्ञामात्रेणाभेदसूचकम् । संज्ञायामभेदेऽपि संज्ञिषु परं भेद इत्यर्थः ।

त्रय इत्यधिकसंख्याव्यवच्छेदः । व्यवच्छेद्यमाह—न पुनरित्यादि । दशेति परोक्ताः । तदुक्तं वामनादिभिः––

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ इति ।

आह्लादकत्वमित्यादि । समूहालम्बनरूपास्वादे विभावादिविषयत्वं शश्वच्चर्वणा सैवाह्लादः । तत्र विषयत्वेन विभावादिनां कारणतया आह्लादकत्वम् ।

श्रृङ्गारे, अर्थात् सम्भोगे । द्रुतिर्गलितत्वमिव । श्रव्यत्वं पुनरोजःप्रसादयोरपि ।

**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।**

अत्यन्तद्रुतिहेतुत्वात् ।

---

ननु तर्हि माधुर्यस्य विभावादिगतत्वेन रसधर्मात्मता न स्यादिति चेत्, मैवम्, रसस्य विभावादिसमूहालम्बनात्मकत्वेन तेषामपि रसत्वानपायात् । तेन धर्मधर्मिभावः कार्यकारणभावश्च न विरुद्धः ।

वीरादिवृत्तित्वं व्यवच्छिनत्ति—द्रुतिकारणमिति । तेषु चित्तस्य न द्रवीभावः, किन्तु विस्तार एवेत्यर्थः ।

श्रृङ्गार इति करुणशान्तोपलक्षणम् । इह हि सामाजिकानां चित्ते नवरसजन्यास्तिस्रोऽवस्थाः । द्रुतिर्विस्तारो विकासश्चेति । तत्र श्रृङ्गारकरुणशान्तेभ्यो द्रुतिः । वीरबीभत्सरौद्रेभ्यो विस्तारः । हास्याद्भुतभयानकेभ्यश्च विकासः । तत्र द्रुतिः स्वाभाविकात्मकाठिन्यमन्युक्रोधादिकृतदीप्तत्वविस्मयहास्यानुपहितविक्षेपपरित्यागेन सहृदयहृदयस्यार्द्रप्रायत्वम्, चित्तकाठिन्यं तु विलावकोपायविरहेण घृतस्येव । तदाह—द्रुतिगलितत्वमिति । अर्थादिति । विप्रलम्भादावतिशयस्य वक्ष्यमाणत्वात् श्रव्यं नातिसमस्तात्मशब्दं मधुरमिष्यत इति शब्दवृत्तिमाधुर्यं दूषयति—श्रव्यत्वं पुनरिति । तच्च श्रवणानुकूलत्वम् । ओजसि यथा 'यो यः शास्त्रम्' इत्यादि । अत्र हि क्रोधकृतं दीप्तत्वमेवानुभूयते, न माधुर्यम् ।

प्रसादे यथा—'परिम्लान पीनस्तनजघनमङ्गम्' इत्यादि । अत्र हि माधुर्यनियतवर्णाभावेन तदभिव्यक्तिः । ततो न शब्दाश्रयं माधुर्यमिति भावः ।

करुण इत्यादि । तन्माधुर्यम् । अत्यन्तेति । अश्रुपातहेतुत्वात् ।

अयमाशयः—विषयवैरस्यं हि निर्वेदः, स च चित्तस्य स्वरूपात्मविश्रामहेतुः, प्रतिबन्धकविषयोपरागोच्छेदकत्वात् । तस्य च करुणादित्रिष्वेव स्थितिः । आद्ययोः सञ्चारित्वेन सत्यपि तत्र तत्र निर्वेदे प्रियजनस्यालाभेन तत्र विषयविशेषे द्रुतेरास्थायामस्थैर्यात् । शान्ते तु सर्वात्मना विषयविनिवृत्तौ निर्वेदः स्थिर एवेति स्थायित्वेन । ततश्चात्र निर्भरमात्मसुखालम्बनमित्यत्र सर्वातिशायिनी द्रुतिः, अत एवात्रानवरतमानन्दस्रुतधारासम्पातः । करुणे

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥ ६९ ॥**

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः ।

**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।**

वीराद् बीभत्से, ततो रौद्रे सातिशयमोजः ।

**शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यः ॥ ७० ॥**
**व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः ।**

अन्यदिति । व्याप्यमिह चित्तम् । सर्वत्रेति । सर्वेषु रसेषु सर्वासु रचनासु च ।

---

सङ्गमाशानिवृत्तौ प्रियनाशे द्रुतेरास्थेति तत्प्रतिबन्धेनात्मावलम्बनं लघीय इति नात्यन्तिका द्रुतिः । विप्रलम्भे पुनर्जागरूकायां सङ्गमप्रत्याशायां प्रियालाभेष्वास्था लघीयसीति प्रतिबन्धकलाघवेनात्मसुखालम्बनमलघ्विति करुणादिहातिरिच्यते द्रुतिरिति युक्तं द्रुतितारतम्यम्, अत एव सम्भोगाख्यश्रृङ्गारे विषयमात्रालम्बनेन निर्वेदानुपयोगा द्रुतिरल्पैवेति नास्मिन्नश्रुपातलेशोऽपि ।

दीप्तीत्यादि । आत्मा चित्तम् । अविद्यासंवलितस्य जीवत्वमिति वेदान्त्येकदेशिनः । दीप्तिर्वैषविषयासङ्गेन द्रुतिविरोधी कश्चन धर्मः । सैव विस्तृतिः । स्निग्धस्यापि सामाजिकचित्तस्य द्वेष्यात्मविषयविशेषसम्पर्केणोष्णता । यथा सूर्यकान्तस्य सूर्यरश्मिसम्बन्धेन ।

बीभत्स्येत्यादि । तितिक्षाजिघांसाजनकत्वात् । वीरे तु जिगीषैव, वैरिवशीकरणमात्रस्योद्देश्यत्वात् । बीभत्से जुगुप्सिते विषये ममतानास्पदत्वेन तितिक्षा, न तु जिघांसा । रौद्रे त्वपकारिणि वधावधिकः प्रयास इति जिघांसैव, न तु जिगीषा, न वा तितिक्षेति क्रमशो दीप्तेराधिक्यम् । अयमेव रौद्रवीररसयोर्भेदोऽवसेयः । एतदेव विवृतं वीराद् बीभत्से ततोऽपि रौद्र इति ।

शुष्केन्धनेत्यादि । शुष्केन्धनजो वह्निः, स्वच्छवस्त्रसम्बन्धि च जलं यथा द्रागेव सर्वतः प्रसरति, तद्वदित्यर्थः ।

व्याप्यमिति । व्याप्तिविषयसाकांक्षत्वाद् विषयान्तरस्य बाधाच्चित्तमेव तथेत्याह—इह चित्तमिति । सर्वेष्वित्यादि । रूढितः प्रतीतिविषयत्वम्,

**गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥ ७१ ॥**

गुणवृत्त्या उपचारेण । तेषां गुणानाम्-आकारे शौर्यस्येव ।

कुतस्त्रय एव न दश इत्याह—

**केचिदन्तर्भवन्त्येषु दोषाभावात् परे श्रिताः ।**
**अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥ ७२ ॥**

बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चारोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणा

---

रसेषु झटिति प्रत्यायकत्वम् । रचनासु हास्याद्भुतभयानकेषु । चित्तस्य विकासात्माऽवस्थाविशेषः, येन हास्ये वदनविकासः ।

गुणवृत्त्येत्यादि । गुणान रसैकधर्मत्वेन शब्दार्थयोर्न तद्वत्त्वमित्याह— उपचारेणेत्यादि । तद्व्यञ्जकवर्णवत्त्वेन तद्वत्त्वमुपचर्यत इत्यर्थः । तत्पदेनानन्तरप्रसादपरामर्शे बहुवचनासङ्गतेरित्याह—गुणानामित्यादि ।

प्रकृताबाधकत्वाद् व्यावर्तनीयानां दशानां गुणानां व्यावर्तनबीजमुद्भावयति–केचिदित्यादि । अन्तर्भवन्ति, एतल्लक्षणक्रोडीकारादित्यर्थः । दोषाभावादित्यादि । अदोषाविति काव्यविशेषणीभूतादित्यर्थः । तेषु सत्स्वनपकर्षमात्रम्, न तूत्कर्षः, ततो न गुणत्वम् ।

कुत्रचिद् रसविशेषे तत्रान्तर्भावमाह—ओजसि शक्त्या ओजःपदवाच्ये तद्व्यञ्जकशब्दार्थधर्मविशेषे एकवद्भासनम्, सन्धिसौष्ठवादेकस्थानीयवर्णविन्यासाच्च । यथा—

उन्मज्जज्जयकुञ्जरेन्द्ररभसा स्फालावनद्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनी ।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
मन्ये प्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमुज्जृम्भते ॥ इति ।

अत्र गाढबन्धतया व्यक्तमेवोजः । वर्णनीयः पुनरुत्तरङ्गः समुद्रः, अत एवोक्तं श्लिष्टमपुष्टशैथिल्यमिति ।

आरोहो गाढता, अवरोहः शैथिल्यम् । तयोः क्रमः क्रमेण तन्निबन्धः । आरोहपूर्वक अवरोहः, तत्पूर्वक आरोहो वा । यथा—

चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणशोचिरुत्तंसयिष्यति कचांस्तव देवि भीमः ॥इति।

उदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः, तेषामोजस्यन्तर्भावः। पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम्। प्रसादेनार्थव्यक्तिर्गृहीता। मार्गाभेदरूपा समता क्वचिद् दोषः।

---

अत्र सञ्चूर्णितान्ते आरोहः, सुयोधनान्ते अवरोहः। पुनस्तवान्ते पूर्वः, भीमान्ते परः। अत्रापि गाढत्वं व्यक्तमेव। तत्सम्बन्धेनैव शैथिल्यस्यापि गाढत्वाद् गुणत्वम्।

विकटत्वं पदानां वेच्छेदाद् नृत्यप्रायत्वम्।

उदारता च—

स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां
स्खलितरणितमासीत् तत्र चित्रं कलं च। इति।

ओजोमिश्रितेत्यादि। क्रमनियमाभावात् समाधितो भेदः।

**यथा—**

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्॥ इति।

अत्र 'यो यः' इति बन्धे शैथिल्यम्, शस्त्रमित्यत्रोजः। पुनर्बिभर्तीत्यत्र पूर्वं पूर्ववर्णद्वये, अन्त्यवर्णद्वये परम्। एवमुत्तरत्र।

अत्र सर्वत्रैव गाढत्वाद् गुणतेत्योजस्यन्तर्भावः। अत एव वक्ष्यति—'गुम्फ उद्धत ओजसि' इति। भङ्ग्येति। वक्ष्यमाणेषु माधुर्यव्यञ्जकेषु उपात्तस्य समासपदस्य वाक्यस्य तदपि ग्राहकतैव भङ्गः, तत्रैव विवेचयिष्यामः। साक्षादभिधया, न तु व्यञ्जनया। तेन पृथक्पदस्य माधुर्यस्य तद्व्यञ्जकतावच्छेदकभावान्तःपात इत्यर्थः। यथा "गाहन्तां महिषा निपान" इत्यादौ। अत्र प्रतिपदमेव पार्थक्यं रसवृत्तिमाधुर्यस्य व्यञ्जकमेव, न तु तत्तदात्मकमिति भावः।

अर्थव्यक्तिर्झटित्यर्थसमर्पणम्। यथा—

तथा हि 'मातङ्गाः किमु वल्गितैः' इत्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुणः। कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात् तन्निराकरणेनापारुष्यरूपं सौकुमार्यमौज्ज्वल्यरूपा कान्तिश्च स्वीकृता। एवं न दश शब्दगुणाः।

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥

---

सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप लुठसि स्तनयोः प्रियायाः।
बाणैः स्मरस्य शतशो विनिकृत्तमर्मा
स्वप्नेऽपि तां कथमहो न विलोकयामि ॥ इति।

प्रसादाख्यगुणेन तद्व्यञ्जकेन मार्गाभेद इति। यथा रीत्योपक्रमस्तयैव समापनमभेदः, यथा—"गाहन्ताम्" इत्यादि, पदपार्थैक्येनारम्भसमापनात्। क्वचिद् दोष इति। तत्र तस्यानौचित्यात्।

मार्गाभेदे छलत्वं दर्शयति—"मातङ्गा किमु वल्गितैः" इत्यादि। सिंहाभिधाने कोपाटोपेत्यादौ। मसृणः कोमलः, सिंहापेक्षया मृदुत्वेन मातङ्गादीनां मृदुभिरेव वर्णैरुपक्रमः, सिंहे तु कोपसम्बन्धात् तत्त्यागः समुचित एवेति गुणः। समतायां तु दोष एव स्यादित्यर्थः। अभिन्नाया रीतेरुपयोगस्तु वृत्त्यनुप्रासालङ्कारान्तर्भावेनेत्यवधेयम्।

दोषाभावत्वेन संग्रहणमाह-कष्टत्वेत्यादि। श्रुतिकटुत्वं कष्टत्वम्। तन्निराकरणेन त्वपरतयाऽभिधानेन। अपारुष्यं परुषवर्णाभावः। हालिकादि-साधारणपदविन्यासवैपरीत्येनालौकिकशोभाशालित्वमौज्ज्वल्यम्। अनयो-रसत्त्वे रसस्यापकर्षः, सत्त्वे च तदभाव इत्यनुत्कर्षकत्वान्न गुणत्वमित्यर्थः।

उपसंहरति—एवमित्यादि।

अनुगुणानपि दूषयति—पदार्थं इत्यादि। एकपदार्थस्य बहुभिः पदैः, बहूनां च पदार्थानामेकेनाभिधानं पदार्थे वाक्यरचना, वाक्यार्थे च पदरचना।

इति या प्रौढिरोज इत्युक्तम्, तद्वैचित्र्यमात्रम्, न गुणः, तदभावेऽपि काव्यव्यवहारप्रवृत्तेः ।

अपुष्टार्थत्वाधिकपदत्वानवीकृतवामङ्गलरूपाश्लील-ग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यम्,

---

क्रमेणोदाहरणम्—चन्द्र इति वक्तव्ये नयनसमुत्थं ज्योतिरिति बहुपद-प्रयोगः । द्वितीये यथा 'कान्तार्थिनी तु या याति सङ्केतं साभिसारिका' इति बहुपदार्थेष्वभिसारिकापदाभिधानम् ।

एकवाक्यार्थस्यानेकेन वाक्येन प्रतिपादनं व्यासः, तथानेकवाक्यार्थ-स्याप्येकेन प्रतिपादनं समासः । क्रमेण यथा—

अयं नानाकारो भवति सुखदुःखव्यतिकरः
सुखं वा दुःखं वा भवति न भवत्येव च तत ।
पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि तत्
पुनस्तस्मादूर्ध्वं न च भवति दुःखं न च सुखम् ॥

अत्रादृष्टवैचित्र्यात् सुखदुःखवैचित्र्यमित्येकवाक्यार्थोऽनेकवाक्येन प्रपञ्चित इति व्यासः ।

"ते हिमालयमामन्त्र्य" इत्यादावेकवाक्ये बहुवाक्यार्थनिबन्धनात् समासः ।

प्रौढिः प्रतिपादनवैचित्र्यम्, तदेवौजः, तदुक्तं वामनादिभिः, उक्तेर्वैचित्र्यं सौष्ठवम् ।

गुणत्वाभावे हेतुमाह— तदभावेऽपीति । न हि चन्द्रपदेन प्रतिपाद्यमानस्य चन्द्रस्यात्रिनयनादिभिः पदैः प्रतिपादने कश्चिद् विशेषः, प्रत्युत विलम्बेन प्रतीतिमान्थर्यमिति भावः ।

अपुष्टेत्यादि । पदार्थानां विशेषप्रतिपादनात् प्रकृतवाक्यार्थपोषकत्वं साभिप्रायत्वम् । यथा—"महौजसो मानधना धनार्चिता धनुर्भृतः संयति" इत्यत्र हि राजविषयकरतिभावस्य प्रतिपदजीवातुपरिपुष्टिः । एतदभावेऽ-पुष्टार्थतादोषः स्यादिति गुणत्वम् ।

अपारुष्यरूपं सौकुमार्यम्, अग्राम्यत्वरूपा उदारता च स्वीकृतानि। अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनि-गुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा अर्थव्यक्तिः, दीप्तरसत्वरूपा कान्तिश्च स्वीकृता। क्रमकौटिल्यानुल्बण-त्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि विचित्रत्वमात्रम्।

---

वैमल्यं यावदर्थपदता। यथा—"काञ्चीपदं न तु काञ्चीगुणस्थानम्" इत्यत्र गुणपदस्याधिकत्वाद्। एकस्यैवार्थस्य भङ्ग्यन्तरेण पुनः कथनमुक्ति-वैचित्र्यम्। यथा "यदि दहत्यनलोऽत्र" इत्यादौ।

अकाण्डे शोकादिदार्यिताभावोऽपारुष्यम्। यथा—"मृते यशःशेष" इति।

अग्राम्यत्वं वैदग्धीवाच्यत्वम्। यथा—

कामं कन्दर्पचाण्डालो मयि वामाक्षि निर्दयः।
त्वयि निर्मत्सरो दिष्ट्या·········॥ इत्यत्र।

स्वीकृतानीति। तेषां तदन्यत्वात्।

वस्तुनो वर्णनीयस्य डिम्भादेः स्वभावोऽसाधारणं रूपं क्रिया वा, तस्य स्फुटत्वं वर्णनया व्यक्तीकरणम्, यथा—

कलक्वणनगर्भेण कण्ठेनाघूर्णितेक्षणः।
पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियाम्॥ इत्यत्र।

दीप्तो झटिति प्रतीयमानः। ध्वनिगुणीभूतव्यङ्ग्याभ्यां रसपदस्य प्रत्येकमन्वयः। गुणश्च यस्य रसस्य न गुणत्वमिति भावः।

क्रमेत्यादि। क्रमः क्रियापरम्परा। कौटिल्यं विदग्धचेष्टितम्। अनुल्बणत्वं प्रसिद्धिः। वर्णनाविरहोऽनुकूलं च। उपपादकयुक्तिविन्यास उपपत्तिः। एगां योगः सम्मिलनम्। स एव रूपं यस्या घटनायास्तदात्मा। तद्रूपः श्लेषः। यथा 'दृष्ट्वैकासनसंस्थिते प्रियतमे' इति। अत्र क्त्वान्ता दर्शनादयः क्रियाः। पश्चा-दागत्यादरान्नयनपिधानं विदग्धचेष्टितम्। अस्य चेष्टितस्य लोकस्थले दृष्टत्वात् प्रसिद्धिवर्णनम्। एकासनस्थितयोरेकस्याश्चुम्बनेऽपरस्या नयनरोधनमुप-पादकम्। तत्रालक्षितागमनम्। तत्राप्येकत्रासनसंस्थितिरित्युपपादकयुक्ति-विचित्रता, कवेर्वैदग्ध्यप्रतिपादनात्, असाधारणरसोपकारविरहात् तथा

अवैषम्यस्वरूपा समता दोषाभावमात्रम्, न पुनर्गुणः । कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यात् । अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनम्, तत् कथं काव्यमित्यर्थदृष्टिरूपः समाधिरपि न गुणः ।

**तेन नार्थगुणा वाच्याः**

वाच्या वक्तव्याः ।

**प्रोक्ताः शब्दगुणाश्च ये ।**
**वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥ ७३ ॥**

---

तथा प्रतिसन्धानेनास्वादव्यवधानाच्च न गुणत्वम् । अवैषम्यं प्रक्रमाभेदरूपम् । यथा "उदेति सविता" इत्यादौ । प्रस्तावभङ्गेन केवलं रस एव हीयते, किन्तु कविरप्यपराध्यतीत्याह—अनुन्मत्त इत्यादि । तदेकप्रतिभातोऽर्थोऽयोनिः । अन्यवर्णनमुपजीव्य वर्णितोऽन्यच्छायायोनिः । क्रमेण यथा—"सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गकम्" इत्यत्र ।

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥

इति च ।

हूणः पाश्चात्त्योऽतिगौरो यवनविशेषः । मदरक्तस्य सद्यः श्मश्रूत्पाटनव्यक्तरोमकूपस्य चिबुकस्य नारङ्गकेण रूपणं नान्येन कृतमित्ययोनिः । परत्र च नीलोत्पलनयनयोः सादृश्यं बहुभिर्वर्णितमिति विच्छित्तिविशेषचमत्कारकमिदमित्यन्यच्छायायोनिः । यदीति । तेन काव्यकारणस्याप्यदृष्टेर्न तद्गुणत्वमित्यभिप्रायः ।

तेनेति । वाच्यत्वाभावे व्यङ्ग्याः स्युरित्याह—वक्तव्या इति ।

गुणवैधर्म्येण न तद्व्यपदेशविषयाः, तर्हि कथं माधुर्यादीनां शाब्दगुणत्वव्यवहार इत्याह—प्रोक्ता इत्यादि । उपचारेणेत्यर्थः ।

ननु तद्व्यञ्जकत्वेन तदुपचार इत्युक्तम् । तत्र के व्यञ्जकाः, कथं वा तत्त्वमित्यत आह—वर्णा इत्यादि । समसनं समासो नञादियुक्तोऽर्थः । स च संसृष्टोऽर्थः । तेन विग्रहवाक्यस्यापि ग्रहणम्, केवलं विभक्तिस्तत्र

के कस्येत्याह—

**मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥ ७४ ॥**

ट-ठ-ड-ढवर्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफलकारौ ह्रस्वान्तरिताविति वर्णाः, समासाभावो मध्यमः समासो वेति समासः, तथा माधुर्यवती पदान्तरयोगेन रचना माधुर्यस्य व्यञ्जिका । उदाहरणम्,—

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥

---

वैकल्पिकेति नैकपदता । क्वचित्तु विभक्तेरलोपेऽप्यैकपद्यम्, यथा 'कण्ठेकाल' इत्यादौ घटनापदपौर्वापर्यात् । तेषां गुणानाम् । इता गताः प्रसिद्धाः, न त्वस्मत्कल्पिता इत्यर्थः ।

मूर्ध्नि इत्यादि । स्पर्शा वर्गाः । अनेकपदानामैकपद्यं वृत्तिः । ऐकपद्यं प्राप्तानि चतुरनधिकानि पदानि अतिप्रचुरपदारब्धे समासेऽर्थप्रतिग्राहतास्वादो व्यवधीयत इति माधुर्यापचयस्तत्र । शिरसि निजेत्यादि । समभिव्याहारात् तल्लाभः । तेन 'कुर्वन् कतिपयैः' इत्यत्र न कयोः संयोगमाधुर्यम्, समासपदेन तदभावस्याभिधानमुक्तमनुसृत्य व्याख्येयम् । अत एवेति भङ्ग्येति प्रागुक्तम् । समस्तनव्युत्पत्त्येत्यर्थः । पदान्तरयोग इत्यादि । यथा 'अलङ्कुरु चलचन्दनैः' इत्यत्र पदयोः सन्धौ मधुरवर्णोत्पत्तिः, न तु 'उपर्युदर' इत्यादौ ।

अनङ्गरङ्गेत्यादि । स्थानमहिम्नाङ्गाभावेऽपि नृत्यविशेषोक्तिरियम् । आप्तवशीकरणभर्तुर्गमनादिनिष्ठो विशेषो भङ्गी, तदित्यनुभवैकसौन्दर्यम् । स्तनभारेणाङ्गमीषन्नताङ्गं भङ्गीना नवत्वेन बहुत्वम् । उद्देश्यं प्रति निर्देश्यभावेनाङ्गमिति न कथितपदम् । अङ्गीकृतं स्वयमादरेणाश्रितम् । यथाङ्गीकरणप्रकारेण एता भङ्ग्यः स्वान्तानि चित्तानि । विषयान्तरमपरम् ।

अत्र शृङ्गारवृत्तिमाधुर्यं कवर्गस्य तृतीयस्तत्पञ्चमो वर्णः । अनङ्गेत्यादौ अतीतेत्यादौ शान्तेत्यादौ च । द्वित्रिपदारब्धा मध्यमा समासाः । प्रति····

**योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः ।**
**टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ।।७५।।**

वर्गप्रथमतृतीयाभ्यामन्त्योर्द्वितीयचतुर्थयोः रेफेण अध उपरि उभयत्र वा यस्य कस्यचित्, तुल्ययोस्तेन तस्यैव सम्बन्धः टवर्गोऽर्थात् णकारवर्जः । शकारषकारौ दीर्घसमासो विकटा सङ्घटनौजसः ।

उदाहरणम्--

मूर्ध्नामुद्वृत्तकृत्तेत्यादि ।। ४४९ ।।

**श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् ।**
**साधारणः समग्राणां स प्रसादो गुणो मतः ।। ७६ ।।**

समग्राणां रसादीनां सङ्घटनानां च ।

---

ममिति तदङ्गमिति च पदयोः सन्धाने चान्त्यधकारतकारोपदानाद् मधुररचना माधुर्यं व्यञ्जयतीति लक्ष्यसङ्गतिः ।

ओजोव्यञ्जकमाह--योग आद्येत्यादि ।

कवर्गस्य प्रकृतत्वात् तस्यैवाद्यतृतीयौ । तदाह-वर्गेत्यादि । उपरीत्यादि । योगपदस्याविशेषेणोपादानात् । तुल्यपदस्य भेदानभिधानतात्पर्यमाह—तेन तस्येति । कत्वाद्याश्रयस्य कत्वाद्याश्रयत्वेनेत्यर्थः । योगपदं सर्वत्रान्वेति । अर्थादिति । लघोष्टवर्गपञ्चमस्य माधुर्येणोपादानात् । शषयोस्तालुमूलमूर्धाङ्गोच्चारणप्रयत्नगौरवेण दृढप्राणता । दन्त्यस्य सकारस्य बाह्यदन्तगतत्वेन प्रयत्नलाघवम् । दीर्घः पञ्चादिपदारब्धः । विकटपदान्तरयोगेनौजोव्यञ्जिका घटना । पदानां विन्यासाः ओजस इत्यमुना व्यञ्जका इत्यनुषज्यते ।

प्रसादव्यञ्जकमाह—श्रुतिमात्रेणेत्यादि । वर्णानामवाचकत्वाच्छब्दोऽत्र पदम् । समग्राणां साधारण्येनैकस्यापि वैधर्म्यम् ।

समग्रपदार्थमाह--रसादीत्यादि । आदिपदाद् वस्त्वलङ्कारग्रहणम् ।

उदाहरणम्—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥४५०॥

यद्यपि गुणपरतन्त्राः सङ्घटनादयः, तथापि

**वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।**
**रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ ७७ ॥**

क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः ।

---

परिम्लानमित्यादि । शयन शय्या । कथयत्यावेदयति । राजनिवेदनस्य दुःखावगमकत्वात् । उभयतः स्तनजघनस्थानयोः । स्तनजघनेति वसन्तकालप्रभवपुष्पादिदर्शनपरिहाराय न्युब्जकायं शयनात् । अन्तः शयनमध्यभागः । हरितं कोष्मणापाकात् । तनोः क्षीणस्य, अतो नान्यपीडकता । परिमलनम् आमर्दनम् । न्यासो रचना । व्यस्तं विपरितम् । आक्षेपोऽभिघातः । स च श्लथः शिथिलः । अबलप्रयोज्यत्वादामर्दाक्षमः । तेन यानि वचनान्युद्धृतानि तैर्व्यस्तन्यासे हेतुरयम् । शरीरसंयोगस्याल्पदेशावच्छिन्नत्वेनाङ्गकार्श्यज्ञानम्, न तु तदङ्गं दृष्टचरम् ।

अत्रान्वयप्रतियोगिनां यथास्थानमवस्थितेर्झटित्येवान्वयबोधात् प्रसादः ।

प्रतिप्रसवमाह—यद्यपीत्यादि । गुणपरतन्त्रास्तद्व्यञ्जकत्वनियताः । सैव निर्मातव्या । क्वचित् क्वचित्, तेनामीषां गुणव्यञ्जकत्वनियमे वक्त्राद्यौचित्यबोधकायोद्यत्वादुत्सर्गः, न तु व्यभिचारेण तद्व्यञ्जकत्वमिति भावः ।

वक्ता कविस्तन्निबन्धश्च । तयो रसाविष्टत्वादिधीरोदात्तत्वादिभेदाद् बहुविधमौचित्यम् । वाच्यं वर्णनीयम् । प्रबन्धो महाकाव्यनाटकादिश्रव्यार्थकदृश्यार्थकत्वादिभेदान्नाना । तेषामौचित्यं लक्ष्येषु वक्ष्यते । वृत्तिः समासः । उक्तविषयादन्योपादानमन्यथात्वम् ।

यथा—

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽसौ ।।४५१।

अत्र हि न खलु वाच्यं क्रोधादिव्यञ्जकम् । अभिनेयार्थं च काव्यमिति तत्प्रतिकूला चोद्धता रचनादयः । वक्ता चात्र भीमसेनः ।

---

मन्थायस्तेत्यादि । मन्थो मन्थनम् । आयस्तमान्दोलितम् । प्लुतं व्याप्तम् । बहुव्रीहिः । पुनश्चलन्मन्दरपदेन सह कर्मधारयः । धीरो गम्भीरः । कोणो वादनदण्डः । आघातस्ताडनम् । सङ्घट्टो मल्लानामिव परस्परामर्दः । आटोपः सहकारोपसरणम् । अन्योन्येत्यपि पाठः सुगम एव । संघट्टस्तत्प्रभवो गडगडायमानः शब्दः । कृष्णा द्रौपदी । क्रोधस्तत्फलं कुरुकुलविनाशः । अग्रदूतो भविष्यदर्थस्य प्रथमावेदकः । उत्पातोऽमङ्गलहेतुः । निर्घातवातः वातजन्यो निर्घातः, मेघानां वातानां च परस्परसंघट्टजश्चण्डध्वनिर्निर्घातः । तत्र वातजन्योऽत्यन्ताशुभहेतुः । केनानिर्वचनीयबलगरिम्णा । तत्र हेतुः—अस्मत्सिंहनादेत्यादि । प्रतिनादे नादस्यापि संवलनया मांसलत्वात् तदुपन्यासः । अनतिबलप्रयोज्यं त्वभिशब्दस्य नास्मत्सिंहनादोपमेयतेति भावः । दुन्दुभिस्तत्प्रभवः शब्दः । ताडितस्ताडनेनोत्पादितः । अन्यथा मन्दरध्वानसिंहनादाभ्यां वाद्यस्योपमित्यनुपपत्तेः ।

अत्र हीति । वाच्यं दुन्दुभिशब्दरूपम् । न खलु तत्क्रोधादिना जनितम्, अपि तु युद्धावेदनेच्छयैव । तदाह—न खल्विति । व्यञ्जकमिति । अनुभावादिना तद्बोधन एव तथात्वात् । न चैवमत्रेत्यर्थः । आदिपदादुत्साहग्रहणम् । अभिनेयेत्यादि । अङ्गादिक्रियया नायकाद्यवस्थानुकरणमभिनयः । काव्यं नाटकम् । दीर्घसमासेऽर्थप्रतिपत्तौ विलम्बेनाभिनयेन झटिति प्रत्याययितुमशक्यत्वादित्याह—तत्प्रतिकूला चेति ।

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः ।

यथा—

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ।।

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते ।

तथा हि–आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः,

---

वचनौचित्यमाह—भीम इत्यादि । रौद्ररसप्रधानस्य धीरोद्धतस्य सम्बद्धताभिधानस्वभावत्वात्, न वा तस्य क्रोधादियुक्तिः ।

प्रौढेत्यादि । प्रौढो बलवता प्रयुक्तस्तदनुरूपमुच्छलनमूर्ध्वप्रसरणम्, तस्य रयस्तज्जनको वेगः । मिलदिति त्रासविशेषणम् । सैंहिकेयो राहुस्तत्कृत उपघातः पीडा, आकृष्टा गमनात् प्रतिषिद्धा अश्वा यत्र, तथा तिर्यग्वलितो रविरथो येनारुणेन । तिर्यग्वलनं चक्रसंस्थापनम् । भयानुभावोऽयम् । कन्धरारन्ध्रभाजां मरुतां भागैरित्यर्थः । भाङ्कारैर्भालभालेति प्रशंसयोच्चरितैः । ऊर्ध्वप्रसारितवायुना नासिकतां प्रापितैः । उत्तमाङ्गम्, न तु मूर्च्छाच्छेदेऽपि भयजनकत्वादुत्तमत्वम् ।

अत्र वाच्यस्य कुम्भकर्णोत्तमाङ्गस्य भीमत्वेनौजस्वित्वादुचिता समुद्धता रचना । ते रचनादयः ।

आख्यायिकेत्यादि । तस्यामुच्छ्वासादिना वक्त्रापरवक्त्रादिना छन्दोविशेषेण सुव्यक्ततया गद्यप्राणभूतविकटवर्णप्रकर्षश्रयेण मसृणाः मृदवः । कथायामुच्छ्वासादिरहितायां वर्णनीयमहापुरुषादिचरितसर्पणाकुरूपमसृण-

कथायां रौद्रेऽपि नात्यन्तमुद्धताः, नाटकादौ रौद्रेऽपि न दीर्घसमासादयः ।

एवमन्यदप्यौचित्यमनुसर्तव्यम् ।

**इति काव्यप्रकाशे गुणालङ्कार-**
**भेदनियतगुणनिर्णयो नाम**
**अष्टम उल्लासः ।**

—: ० :—

---

बन्धवर्णायाम् । उद्धता उर्जस्विनः । नाटकेति । दीर्घसमासेऽभिनयदमान्थर्य-मित्युक्तत्वात् ।

एवमित्यादि । तत्र मुक्तकाद्यौचित्यम् । यथा एकस्मिन् छन्दसि वाक्यसमाप्तौ मुक्तकम्, द्वयोः सन्दानितम्, त्रिषु विशेषकम्, चतुर्षु कलापकम्, पञ्चप्रभृतिचतुर्दशान्तेषु कुलकम् । तत्र रसाभिनिवेशेन कवे रसाश्रयमौचित्यम् । यथा 'शून्यं वासगृहम्' इत्यादौ । नीरसे तु कामचारः । सन्दानितकादौ वाक्यसमाप्तेर्नानैकट्यमिति तत्र मध्यमदीर्घ-समासे एव सङ्घटने त्रिष्वेव प्रबन्धगतेषु तद्गतमौचित्यम्, नात्मीयम् । अन्यदप्यौचित्यसहस्रं गौरवभयाद् न प्रपञ्चितमिति ।

**इति परमानन्दचक्रवर्तिकृतकाव्यप्रकाश-**
**विस्तारिकायां गुणनिर्णयो नाम**
**अष्टम उल्लासः ।**

—: ० :—

## नवम उल्लासः

गुणविवेचने कृतेऽलङ्काराः प्राप्तावसरा इति सम्प्रति शब्दालङ्कारानाह—

**यदुक्तमन्यथावाक्यमन्यथाऽन्येन योज्यते ।**
**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ।।८७।।**

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च ।

तत्र पदभङ्गश्लेषेण यथा—

---

।। श्रीजगदम्बायै नमः ।।

अलङ्कारनिरुक्तावसर एव संगतिः । प्रतिबन्धकीभूतशिष्यजिज्ञासान्तराभावात् । तदाह—गुणविवेचन इति । सम्प्रत्यर्थालङ्कारनिरुक्तेः प्राक् । काव्यलक्षणे शब्दस्य प्रागुपादानेन तदलङ्कारस्यैव प्रथमं जिज्ञासितत्वात् । तदाह— शब्दालङ्कारानिति ।

तत्रोक्तिवक्रतायाः स्फुटं शब्दालङ्कारतेति प्रथमं वक्रोक्तिमाह—यदुक्तमित्यादि । वक्तृश्रोतृनिर्वाह्योऽयमलङ्कारः । वक्तुरन्याभिप्रायकं श्रोत्रान्यथा समर्थितमित्यर्थः । अन्येनेत्यनेन स्वोक्तेरन्यथाकरणे द्वितीयापह्नुतौ नातिप्रसङ्गः । अपह्नुतिर्यथा—

काले वारिधराणामपतितया नैव शक्यते स्थातुम् ।
उत्कण्ठितासि तरले नहि नहि सखि पिच्छिलः पन्थाः ।।

अत्र पत्यभिप्रायकं स्ववचनं पतनाभावेन स्वेनैव समर्थनात् ।

श्लेषेण वक्तुरविवक्षितेन शब्दस्य शक्यान्तरेण । तथेति । ताभ्यामुपाधिभ्यामित्यर्थः । तदाह—श्लेषवक्रोक्तिरित्यादि ।

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ।
युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ।।४५३।।

अभङ्गश्लेषेण यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ।।४५४।।

काक्वा यथा—

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ ।।४५५।।

---

नारीणामित्यादि । नारीणां स्त्रीणाम् अनुकूलमाचरसि, यदि जानासि विज्ञोऽसि । विज्ञ एव स्त्रीणामनुकूल इत्यर्थः । तेन नार्यभिप्रायकमिदं वचनं विपक्षाभिप्रायकेण वामानामित्यनेन योषिदभिप्रायेणाबलानामित्यनेन तत्पुनरोजोभावतात्पर्यकेण बलाभावेत्यनेन तदपि बलपदस्यासुरत्वेन पुरन्दरपदेनान्यथा योजितम् । नारीणामिति स्त्रीणां पदं भागम्, न वैरिणाम्, अभावस्यावबोधनात् श्लेषः । वामाः स्त्रियो विपक्षाश्च । हितकृदिति करोतिकृन्तत्यो रूपम् । अबलाः स्त्रियो बलशून्याः । बलमोजो बलोऽसुरभेदश्च ।

अत्र नारीणामिति पदमुपजीव्य प्रदत्तानां श्लेषान्तराणाम्, स एव मूलमिति तेनैव व्यवहारः ।

अहो इत्यादि । दारुणा हिंस्रा काष्ठेनेति च । सूक्ष्मग्राहित्वमाशुग्राहित्वं गृहीतग्राहित्वं वेति गुणत्रयम् । धान्येन धनवानित्यत्रेव तृतीयाया अभेद एवार्थ इत्याह—दारुमयीति ।

अत्र दारुणत्वं परस्य दारुणवत्त्वेनान्यथा योजनम् ।

गुरुजनपरतन्त्रेति । प्रवासं जिगमिषौ नायके नायिकायाः सख्याश्च वचन-प्रतिवचने । देशं विषयान्तरम्, न तु ग्रामम् । सुरभिसमये वसन्तकाले ।

**वर्णसाम्यमनुप्रासः**

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम्। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः।

**छेकवृत्तिगतो द्विधा।**

छेका विदग्धाः। वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः। गत इति छेकानुप्रासो वृत्त्यनुप्रासश्च।

---

अत्र नैष्यतीत्यनागमनाभिप्रायेण नायिकयाभिहितम्। न एष्यति, अपि तु तथेति ध्वनिविकारेणागमने सख्या योजितम्।

वर्णेति। वर्णानां साम्यं समानेन धर्मेण सम्बन्धः। स च गुणक्रिययोरन्यतरः। तत्र गुणेषु वर्णेषु गुणाभावात् श्रुतिरूपः क्रियारूपः। सजातीयश्रुतिविषयत्वमित्यर्थः। श्रुत्या साजात्यं च प्रकारीभूतधर्मेण कत्वगत्वादिना। तेन व्यञ्जनसाम्यमेवानुप्रासत्वनियामकम्।

यमकेऽतिव्याप्तेराह—स्वरवैसादृश्येत्यादि। अत्र स्वरसादृश्यं न प्रयोजकम्, 'कुलालकलत्रम्' इत्यादिष्वपि दर्शनात्। यमके तु समानानुपूर्वकत्वनियमः। अत एव यमके वक्ष्यति 'वर्णानां सा पुनः श्रुतिः' इति। साम्यमिति। तत्त्वं तु समानश्रुतिमत्त्वमित्यर्थः। सम्भवत् स्वरसादृश्यं तु तत्प्रकर्षकम्। एतद्व्यञ्जयितुमेव व्यञ्जनसाम्यमित्यपहाय वर्णसाम्यमित्यभिहितम्। न कमलं कमलं पदमम्भसीत्यादौ द्वयोः सङ्कर एव। अनतिव्यवहिततया पुनः श्रुतिर्यमकस्यासङ्कीर्णमुदाहरणम्। अर्थदूरतायामेवास्य विषयत्वात्। तदुक्तं दण्डिना—पूर्वानुभूतसंस्कारबोधनीयव्यहारतेति। तथा च सदृशज्ञानसंस्कारोद्बोधकं वर्णसाम्यमनुप्रास इत्यर्थः पर्यवस्यति।

अनुप्रासपदस्य योगार्थमाह—रसाद्यनुगत इत्यादि। अनोरर्थोऽनुगतः, प्रस्य प्रकृष्टः, निरुपसर्गस्यास्ते रासो न्यासः।

विभजते—छेकेति। एकत्वशङ्काव्युदासाय द्विधेति।

नियतागुणविशेषव्यञ्जकत्वेन परिगणिता वर्णास्तद्गतस्तन्निष्ठो व्यापारः सहकारो, आनुपूर्वीविशेषः, स एव वृत्तिः। गतो ज्ञातः, अर्थादाभ्यामुपाधिभ्याम्। तदाह—छेकानुप्रास इति।

किं तयोः स्वरूपमित्याह—

**सोऽनेकस्य सकृत्पूर्वः**

अनेकस्य, अर्थाद् व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः ।

उदाहरणम्—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ।। ४५६ ।।

**एकस्याप्यसकृत्परः ॥ ७९ ॥**

एकस्य अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः ।

---

स इति । द्विविधोऽनुप्रासः । अनेकस्येति । प्रकृतत्वाद् वर्णस्यानुयोगिसाकांक्षत्वाच्च साम्यमिति सुबन्ते तदाहार्थादिति । अर्थात् स्वरसाम्यस्यानियामकत्वात् । पूर्वपदार्थमाह–छेकेत्यादि ।

केचिदत्रानेकधेत्यनेन साम्यविशेषणम् । अनेकधा स्वरूपतः क्रमतश्च । तेन जरा राजेत्यत्र क्रमभेदेनास्याविषय इत्याहुस्तन्न, अत्रापि तत्प्रसक्तेरिष्टत्वात् ।

ततोऽरुणेत्यादि । अरुणस्य सारथेरेव, न तु सूर्यस्य । तस्यापि स्पन्देन, न तु विशेषोद्यमेन, शान्तवीर्यस्यैव समुचितत्वात् । मन्दो विरुचिः । वपुरिति । यस्य शरीरस्य तथाविधं सौन्दर्यमासीत् । शशीति । रुचिविभवविनाशे शशस्य कलङ्कस्य व्यक्तत्वात् । कामिनीगण्ड इव पाण्डुः । एवमेव वैरिपराभवयोः स्वोपाये यस्याप्युपमेयताप्राप्तिः । प्रभातवर्णनेयं व्यासपादानाम् ।

अत्र स्पन्दमन्दीत्यत्र कामकामीत्यत्र च नकारदकारयोः, ककारमकारयोरप्यनेकस्य सकृत्साम्यम् ।

एकस्येत्यादि । असकृदिति व्याचष्टे द्विरित्यादि । अत्रैकेनापि सकृत्साम्ये वृत्तित्वमिच्छन्ति । यथा 'व्याधूतचूताङ्कुर' इत्यत्र ताकारस्य, तन्न, अस्या गुणव्यञ्जकनियतवर्णगतत्वनियमात् तांकारस्य माधुर्यादिव्यञ्जकत्वे-

तत्र—

**माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।**

**ओजःप्रकाशकैस्तैस्तु परुषा**

उभयत्रापि प्रागुदाहृतम् ।

**कोमला परैः ॥ ८० ॥**

परैः शेषैः । तामेव केचिद् ग्राम्येति वदन्ति ।

उदाहरणम्—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥४५७॥

**केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।**

एतास्तिस्रो वृत्तयो वामनादीनां मते वैदर्भी—गौडी—पाञ्चाल्याख्या रीतयो मताः ।

---

नापरिगणितत्वात् । छकारादिविशेषव्यपदेशे चानुप्रासत्वसामान्यम् । द्विधेत्यस्यैकत्वसन्देहव्यवच्छेदकत्वेन व्याख्यातत्वात् । अन्यथाधिकसंख्याव्यवच्छेदकत्वे लाटानुप्रासेऽनुप्रासत्वाभावप्रसङ्गात् । किन्त्वेकस्य सकृत्साम्ये नाधिकचमत्कार इति विदग्धाप्रयोज्यत्वानुच्छेदकत्वेन संगृहीतमिति भावः ।

वृत्तिं विभजते—माधुर्येत्यादि । सज्जनया चतुरया नागरिकया स्त्रिया उपमिता उपनागरिका ।

ओज इत्यादि । तैः वर्णैः परुषा, तद्वर्णघटितत्वात् । उभयत्रोपनागरिकायां परुषायां च । प्रागिति । अनङ्गरङ्गेत्यादि । प्रौढच्छेदेत्यादि । एवं कोमलेत्यपि । एवं परैरित्यादि । ग्राम्या अविदग्धस्त्रीतुल्या ।

अपसारयेत्यादि । असंयुक्तह्रस्वा घोषाः, रकारबाहुल्यात् कोमला ।

वामनादीनामित्यस्य रीतित्वमभिधायात्मत्ववादिनामित्यर्थः ।

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ८१ ॥**

शब्दगतोऽनुप्रासः शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात् लाटजनवल्लभत्वाच्च लाटानुप्रासः। एष पदानुप्रास इत्यन्ये ।

**पदानां सः**

स इति लाटानुप्रासः ।

---

शाब्द इत्यादि। शब्यते प्रकाश्यतेऽनेनेति शब्दः। पदं प्रातिपदिकं च। लाटो देशविशेषस्तत्स्थः कविस्तत्प्रियत्वात् तथा। अनुप्रासो वर्णसाम्यमेव। तुर्भिन्नक्रमः। लाटानुप्रासव्यवहारः पुनः शाब्दः शब्दगतः, न वर्णनिष्ठः। ततो वृत्तिच्छेकाभ्यामस्य भेदः।

मिश्रास्तु साम्यमनुवृत्त्य तद्विशेषणीभूतस्यापि शाब्दपदस्यानुप्रासलिङ्गग्रहणम्, विधेयतया तस्य प्राधान्यादिति वदन्ति, तन्न, अविशेषमपहाय तद्विषये यस्य लिङ्गग्रहणमित्युक्तेर्नियुक्तिकत्वात्। शब्दगतोऽयमनुप्रास इति विवृण्वता ग्रन्थकृतैवानुप्रासेन सह समन्वितत्वाच्च।

लाटानुप्रासस्वरूपमाह—भेद इत्यादि। तात्पर्यविषयतावच्छेदकमात्रभेदान्मात्रपदेन शब्दार्थयोरैक्यमावेदितुम्।

तद्वक्ष्यति—शब्दार्थयोरभेद इत्यादि। अनुप्रासाधिकारे पुनरनुप्रासग्रहणम्, उत्तरत्र तदधिकारनिवृत्त्यर्थम्।

ननु यमकस्य नानुप्रासभेदता, भिन्नार्थानुसन्धानेन रसव्यवहिताऽनुप्रासपदयोगविरहात्, रसाद्यनुगमाभावात्। तुकारोऽनुप्रासाद् व्यतिरेकसूचकः। तेनायमलङ्कारात् पृथगेवेति मिश्राः, तन्न; अस्याननुप्रासत्वे लाटानुप्रास इत्यत्रानुप्रासपदादर्थानुपस्थितिप्रसङ्गात्, शक्तिग्रहाभावात्। अत एव 'लाटानुप्रासेन सहानुप्रासः पञ्चधा मतः' इत्यनुप्रासस्य पञ्चविधत्वमुक्तं प्राचीनैः।

यत्त्वनुप्रासयमकभेदो गड्डरिका प्रवाहेणेति तन्न; उक्तयुक्त्यानुप्रासताया अप्रसङ्गात्। अन्य इति। प्रातिपदिकनिर्वाहकत्वेऽपि पदानुप्रासाभिधायोग्यत्वात्।

विभजते—पदानां स इति। अत्र वर्णवचनेन वाक्यावृत्तिमभिप्रैति।

उदाहरणम्—

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥४५८॥

**पदस्यापि**

अपिशब्देन स इति समुच्चीयते ।

उदाहरणम्—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥ ४५९ ॥

**वृत्तावन्यत्र तत्र वा ।**

---

यस्येत्यादि । अत्रैकवाक्ये तुहिनदीधितेर्दवदहनत्वम् । अन्यत्र च दवदहने तुहिनदीधितित्वं विधेयमिति पदपदार्थयोरैक्येऽप्यनूद्यत्वविधेयत्वे तात्पर्यविषयतावच्छेदके भिन्न एवेति सर्वत्रैवमनुसन्धेयमिति ।

अत्र बहूनि पदपदार्थयोः पुनरुक्तानि ।

अपिशब्देनेत्यादि । एकविशेष्यान्वयित्वरूपसाहित्यसूचनात् ।
वदनमित्यादि ।

शीतकाले सुखस्पर्शा ग्रीष्मकाले च शीतला ।
भर्तृभक्ता च या नारी विज्ञेया वरवर्णिनी ॥

वदनं सुधाकरत्वेन निरूप्य विशिनष्टि—सुधाकरः क्व नु पुनरिति ।
अत्र सुधाकरस्यैकस्य विधेयत्वानूद्यत्वाभ्यां पूर्ववदेव तात्पर्यविषयतावच्छेदकभेदः । अत्र सुधाकरपदस्यैकस्य साम्यम् ।

वृत्ताविति । वृत्तिर्युक्तार्थता । समासस्य तद्धितस्यापि ग्रहणम् ।
तदुक्तम्—

विशेष्यस्य विशेषेण मिलितं युक्तमुच्यते ।
समासाख्यं तदेव स्यात् तद्धितोत्पत्तिरेव वा ॥ इति ।

तेन "त्वयि दृष्टायां बाले नयनवतां नयनमुत्सवं प्राप" इत्यत्रापि व्याप्तिः ।

**नाम्नः स वृत्त्यवृत्त्योश्च**

एकस्मिन् समासे भिन्ने वा समासे समासासमासयोर्वा नाम्नः प्रातिपदिकस्य, न तु पदस्य सारूप्यम् ।

उदाहरणम्—

सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ।।४६०।।

---

भिन्नत्वमेकनिरूप्यमिति सूत्रे पाश्चात्त्यमपि तत्रेति पदं प्रथमं व्याचष्टे—एकस्मिन्निति । एकत्र तद्धितप्रयोगे लाटानुप्रासहेतुर्द्विःप्रयोगासम्भवेन पञ्चधा विभाजकत्वाभावात् समासपदेन वृत्तेर्विवरणम् ।

नन्वस्याद्यन्तस्य नामत्वे पदादस्य न भेद इत्याह—नाम्नः प्रातिपदिकस्येति । प्रत्ययरहितस्य प्रकृतिभागस्य प्रातिपदिकत्वात् । तदाह—न तु पदस्येति । सारूप्यमित्यनुवृत्तस्य साम्यमित्यस्यार्थः ।

सितकरेत्यादि । सितकरस्य चन्द्रस्य करो रश्मिः, विभाकरः सूर्यः, तस्येवाकारः शरीरं यस्य । यद्वा विभाकरस्याकारः शरीरी । विभाकरेति सम्बुद्धिः । तत्र हेतुमाह—धरणिधरेति । ध्यानधरणाय विभाकरावतारेत्यर्थः । पौरुषं विद्यासौन्दर्यादिकम्, तदुपार्जिता कमला सम्पत्तिः । द्वितीयकमलापदस्य प्रशस्तसम्पत्तिरर्थः । एवकारेणान्यस्येत्यनेन चायोगान्ययोगव्यवच्छेदः । ननु द्वितीयकमलापदस्य प्रशस्तसम्पत्तिपरत्वे पदार्थतावच्छेदकभेदान्न लाटानुप्रासतेति चेन्मैवम्, प्रशस्तसम्पत्तित्वस्य तात्पर्यविषयतावच्छेदकत्वात् । 'तदितरार्थाभेदस्यैव भेदे तात्पर्यमात्रता' इत्यनेन विवक्षितत्वात् । अर्थान्तरसङ्क्रमितवाच्यस्यासङ्कीर्णोदाहरणं तु व्यवधानेन पुनः प्रयोगे मन्तव्यमिति चेन्न, द्वितीयकमलापदत्वे लाटानुप्रासता न स्यात् । न च प्रकृत्यंशमादाय तथा, पदानुप्रासस्तु सुधाकरपदयोरपि तत्त्वप्रसङ्गात् । वस्तुतस्तु पौरुषं कमलमाश्रयो यस्या सा तथाऽधिष्ठानाच्चेष्टा नृपाख्यसम्बन्धः । कमला कमलवती मत्वर्थीया । अन्वयादत्रापि स एव सम्बन्धः । स्त्रीप्रत्ययतद्धित्तप्रत्ययप्रकृत्योः कमलभागयोरनुप्रासः ।

अत्रैकत्वसमासे करयोर्भिन्ने विभेति भागयोः समासासमासयो रक्तकमलयोः साम्यम् ।

**तेनायं पञ्चधा मतः ॥ ८२ ॥**

**अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।**

**यमकम्**

---

तेनेत्यादि । अयं लाटानुप्रासः । "मन्दं हसन्तः पुलकं वहन्तः" इत्यत्र, "केशः काशस्तवकविकासः" इत्यत्र च पदान्तपदयोरन्त्यानुप्रासेन पृथक्, छेदादिनैव गतार्थत्वात् । अन्यथा 'रुचिरविभा विभाकराकार' इत्यत्राप्यन्ताद्यानुप्रासान्तरत्वप्रसङ्गात् । तालुवदाद्येकस्थानोच्चार्यत्वसाधर्म्येण सहृदया मन्देन श्रुतिसुखावहत्वाच्छ्रुत्यनुसारत्वमिच्छन्ति । यथा "विरूपाक्षस्य जयिनीः" इत्यत्र जययोस्तालव्यत्वेन श्रुत्यनुसारता । तत्रैकस्थानोच्चार्यत्वेऽपि । वर्णत्वाव्यापकत्वादिसाम्यस्यैव प्रयोजकत्वात्, अन्यथा 'तस्या न भवति विरह' इत्यत्रापि तकारलकारयोः प्रसङ्गात्, उभयोरपि दन्त्यत्वात् । न चैवम्, साम्याननुभवात् ।

नन्वस्य कथमलङ्कारता ? कथितपदत्वेन दोषत्वादुत्कर्षापकर्षत्वयोर्विरोधात् । न चैतदतिरिक्तस्य विषयः, प्रमाणाभावात्; अन्यथानुपपत्त्यैवोपयुक्तौ प्रयोगात् । यथा 'जक्षुर्बिसं धृतविकासि बिसप्रसूना' इयमपरामर्शयोग्ये विषय एव, पुनः प्रयोगस्य कथितपदत्वात् । अन्यथानुपपत्त्यैवोपयुक्तोपयोगात्, यथा 'जक्षुर्बिसम्' इत्यादौ बिसपदस्य कथितत्वं 'धृतपरिस्फुटतत्प्रसूना' इति पाठे तत्पदेन परामर्शसम्भवात् । अथैवं 'वदनं वरवर्णिन्याः' इत्यत्र तु 'स तु कस्मात् कलङ्केन हीनः' इति पाठे सुधाकरपरामर्शे समानत्वादिति मैवम्, तदः प्रयोगे विशिष्टस्य वदनसुधाकरस्य परामर्शः स्यात्, प्रकृतत्वात् । तत्र च कलङ्काभावस्य स्वाभाविकत्वेनोपादानासम्भवात् । न च प्रधानस्य सुधाकरस्य परामर्शो न वदनस्येति वाच्यम् निराकाङ्क्षत्वात् । अत एव 'भाति मुखमिन्दुरस्या यस्य ज्योत्स्नाभिराप्लुता जगती' इत्यत्राभवन्मतयोगः । यत्रपदेन परामृश्यस्यारोपितेन्दोर्मुखज्योत्स्नासम्भवात् ।

अर्थे सतीति । अर्थे अभिधेये । पुनः श्रुतिरिति । श्रुतिसाम्यं प्रयोजकम्, तेन वर्णभेदेन श्रुत्येकत्वं यमकम् । तदुक्तम्—यमकादौ भवेदैक्यं डलयो रलयोर्बवोः । शषयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः । सबिन्दुकाबिन्दुकयोः

समरसमरसोऽयमित्यादावेकेषामर्थवत्त्वेऽन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुमिति 'अर्थे सति' इत्युक्तम्। सेति 'सरोरसः' इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता।

**पादतद्भागवृत्ति तद्यात्यनेकताम् ॥ ८३ ॥**

प्रथमो द्वितीयादौ, द्वितीयस्तृतीयादौ, तृतीयश्चतुर्थे, प्रथमस्त्रिष्वपीति सप्त। प्रथमो द्वितीये, तृतीयश्चतुर्थे, प्रथमश्चतुर्थे, द्वितीयस्तृतीये इति द्वे। तदेवं पादजं नवभेदम्।

अर्धावृत्तिः श्लोकावृत्तिश्चेति द्वे। द्विधा विभक्ते पादे प्रथमादिपादादिभागः पूर्ववद् द्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्विति विंशतिर्भेदाः। श्लोकान्तरे हि नासौ भागावृत्तिः। त्रिखण्डे त्रिंशत् चतुःखण्डे चत्वारिंशत्।

---

स्यादभेदकल्पनम्। यथा 'भुजलतां जडताम्' इत्यत्र डलयोरभेदेऽपि यमकं भवति। अर्थभिन्नानामित्येकार्थकभिन्नानामित्यर्थः। तथा चैकार्थत्वाभावनियतसमानाधिकरणशब्दावृत्तिरिति लक्षणमिति भावः। तेन लाटानुप्रासे न प्रसङ्गः। उभयोरेकस्य वा निरर्थकत्वेऽप्रसङ्गश्च। तेनैव क्रमेण स्थिता पूर्वानुपूर्वी सजातीयानुपूर्वीविषयिका।

विभजते--पादतद्भागेत्यादि। पादः पद्यचतुर्थांशः। तद् यमकम्।

तत्र विकल्पे यमकमाह—प्रथमो द्वितीयादावित्यादि। प्रथमद्वितीयादिभिः पदैः पादाभिधानं प्रथमो द्वितीयादौ यम्यत इत्यन्वयः। समुच्चयेनाह--त्रिष्वपीति। सप्तेति। प्रथमपादस्य विकल्पेनावृत्तौ त्रीणि, द्वितीयस्य द्वे, तृतीयस्यैकम्, प्रथमस्य त्रिषु समुच्चयेऽप्येकमिति सप्तता। पादानां पादयमकानाम्। नवेति। पूर्वपूर्वपादयमनं व्युत्क्रम्य, न परस्य यमनमिति प्रथमद्वितीयतृतीयचतुर्थसंयमनेन भेदान्तरे। **[ अत्र ग्रन्थपातः ]**[१]

---

१. **अर्धावृत्ति......इति मूलादारभ्य सञ्चारी...इत्यन्तं यावद् टीकाग्रन्थपातः।**

प्रथमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगते, आद्यार्धादिभागे यम्यत इत्याद्यन्वर्थतानुसरणेनानेकभेदम्, अन्तादिकम् आद्यन्तिकं तत्समुच्चयः, मध्यादिकम् आदिमध्यम्, अन्तमध्यम्, मध्यान्तिकं तेषां समुच्चयः। तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेषु अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम्। तदेतत्काव्यन्तर्गडुभूतमिति नास्य भेदलक्षणं कृतम्। दिङ्मात्रमुदाह्रियते—

सन्नारीभरणोमायमाराध्य विधुशेखरम्।
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥ ४६१ ॥

विनायमेनो नयताऽसुखादिना विना यमेनोनयता सुखादिना।
महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम् ॥

स त्वारम्भरतोऽवश्यमबलं विततारवम्।
सर्वदा रणमानैषीदवानलसमस्थितः ॥ ४६३ ॥

सत्त्वारम्भरतोऽवश्यमवलम्बितता रवम्।
सर्वदारणमानैषी दवानलसमस्थितः ॥ ४६४ ॥

---

श्रीवत्सलाञ्छनस्तु।

अयं महाजनो महापुरुषो यमेन मानसं चित्तम्, तदेव मानसं सरः, तस्मादरं शीघ्रं यतमानानां रक्षितुं प्रयत्नवतां सादं खेदं राति यथा तथा, अदीयत प्राणवियुक्तस्तदिति भावः। कीदृशेन यमेन? विना पक्षिरूपेण तत्त्वात्तु नयता हानिं कुर्वता। अन्यद् रमानन्दटीप्पणीवन्नेयम्। नयतेत्यस्य स्वस्थानं प्रापयतेत्यर्थः। मानैषीदित्यन्वयः।

भरतोऽतिशयेन। अवश्यं निश्चयेन। आरं विशेषयति—अवलम्बिततारवमिति। अवलम्बितं तारवं तरूणां समूहो येन। पलाय्य वनं गतमित्यर्थः। पुनर्विशेषणं वा अवलम्बिततारवम् अवश्यं वश्यतापन्नं च। कथं भूतः, सर्वं दारयतीति सर्वदारणो यो मानस्तदैषी। सत्त्वगुणेन आरम्भे रतः तत्परः। अवान् अगच्छन्, अलसं यथा तथा अस्थितः, अस्यति क्षिपतीत्यस्थितः।

यथा—

चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे ॥
सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव ॥ ६९२ ॥

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नापद्यते, न तत्रैतद्दूषणावतारः, उभयथापि अस्यानुगमक्षमस्वभावत्वात् ।

यथा—

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ॥ ६९३ ॥
तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ ६९४ ॥

---

चिन्तारत्नमिति । अत्र च्युतत्वाख्यः साधारणो धर्मः पुंल्लिङ्गावरुद्धे उपमेयमात्रेऽन्वेति, न तु विरुद्धलिङ्गावरुद्धे उपमान इति विशिष्टाविशिष्टयोरुपमेयोपमानत्वप्रतीतेर्भग्नप्रक्रमत्वम् ।

सक्तव इति । अत्र शुद्धत्वं साधारणो धर्मो बहुत्वावरुद्धेषु सक्तुषु उपमेयेष्वेवान्वेति । न तु विरुद्धसंख्यावरुद्धे वधूरूपे उपमाने इति विशिष्टाविशिष्टयोरुपमानोपमानत्वाद् भग्नप्रक्रमत्वम् ।

यत्र त्विति । यत्र लिङ्गवचनयोर्वा नानात्वेऽपि साधारणधर्माभिधायि पदं स्वरूपभेदमानुपूर्वीभेदं च नापद्यते, तत्र न दूषणमित्यर्थः ।

उभयेति । समानानुपूर्वीदर्शनेन युगपदेव चोभयसंस्कारोद्बोधनादिति भावः ।

गुणैरिति । अत्रोपमेयोपमानवाचकयोर्गुणरत्नशब्दयोर्लिङ्गभेदेऽप्यनर्घ्यैरिति साधारणधर्माभिधायिपदस्य तृतीयाबहुवचनान्तस्योभयलिङ्गेऽपि तुल्यरूपत्वान्न दोषः ।

तद्वेष इति । तद्वेष इत्युपमेयम्, विभ्रमा इत्युपमानम्, असदृश इति मधुरताभृत इति दधत इति च साधारणधर्माभिधायीनि पदान्युभयत्राप्यन्वितानि । तत्र वचनभेदेऽपि रूपसाम्यान्न दोषः ।

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः । यथा—

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमाद् यामिनीयामात् प्रसादमिव चेतना ।। ६९५ ।।

अत्र चेतना प्रसादमाप्नोति, न पुनरापेति कालभेदः ।

---

तथा हि 'असदृशः' इति पाणिनिमते कञन्तत्वात्, कलापमते दृगन्तत्वादेकवचनान्तक्विबन्तत्वाद् बहुवचनान्तम् । एवम् 'मधुरताभृतः' इत्यपि मधुरतां भर्तुमारब्ध इत्यादि कर्मविहितकर्तृत्वाद् मधुरतया धृत इति कर्मक्रान्तत्वाद् वा एकवचनान्तम्, क्विबन्तत्वाद् बहुवचनान्तम् । एवं दधत इति दधृ धारण इत्यात्मनेपदैकवचनान्तस्य दधातेश्च बहुवचनान्तस्य रूपमिति सर्वत्र साम्यमिति । अन्याभिरसदृश इति अन्यासां वेषैरित्यर्थः ।

न चापत्यार्थं स्नेह इतिवद् यद्यपि रूपसाम्येऽपि लिङ्गवचनभेदस्तदवस्थ एव, तथापि श्लेषावच्छादितो द्राग् न प्रतीयत इति प्रतीतिस्थगनादत्र दोषः ।

यत्तु लिङ्गवचनभेदश्च श्लेषमहिम्नैव न दोषः, अत एव 'येन ध्वस्तमनोभवेन' इत्यादौ श्लेषेऽप्रयुक्तनिहतार्थयोरदोषत्वमिति तन्न, उभयार्थेत्यादिवृत्तिग्रन्थविरोधात् । तेन ह्यनुगमकस्वभावत्वं प्रतिपादयता उपमानिमित्तता च बिलम्ब एवाभिहितः, अन्यथा श्लेषानिर्वाह एवोपन्यस्तः स्यात् ।

किञ्च, श्लेषालङ्कारोऽत्र प्राधान्येन तात्पर्यविषय उपमानिर्वाहकः, प्रयत्नेन परं तन्निर्वाहः । अत एव 'येन ध्वत' इत्यादौ दोषोद्धारेऽप्रयुक्तनिहतार्थावपि श्लेषादिषु न दुष्टाविति श्लेषस्यैव निमित्तत्वमभिहितम् । किञ्च तद्दोषस्य पूर्वमेवोद्धृतत्वात् पुनरुद्धारपौनरुक्त्यापत्तेश्चेति दिक् ।

कालेति । कालो वर्तमानादिः । पुरुषः प्रथममध्यमोत्तमरूपः । विधिरप्रवृत्तप्रवर्तनम् । आदिपदान्निर्वर्तनम्, विश्रान्ति चमत्कारम् ।

अतिथिमिति । यद्यप्यतीतपश्चिमयामिनीयामात् चेतना प्रसादमापेति विवक्षितेन कालेन भेदः तथापि पश्चिमरात्रियामजातीयादद्यापि चेतनाजातीयं प्रसादमाप्नोति, उपमेये तु न तथेति कालभेदो द्रष्टव्यः ।

प्रत्यग्रमज्जनविशेषविभक्तमूर्तिः
　　कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
　　बालप्रवालविटपप्रभवा लतेव ।। ६९६ ।।

अत्र 'लता विभ्राजते, न तु विभ्राजसे' इति सम्बोध्यमाननिष्ठस्य परभागस्यासम्बोध्यमानविषयतया व्यत्यासात् पुरुषभेदः ।

गङ्गेव प्रवहतु ते सदैव कीर्तिः ।। ६९७ ।।

इत्यादौ च गङ्गा प्रवहति, न तु प्रवहतु इत्यप्रवृत्तप्रवर्तनात्मनो विधेः । एवञ्जातीयकस्य चान्यस्यार्थस्योपमानगतस्यासम्भवाद् विध्यादिभेदः ।

---

प्रत्यग्रेति । विभक्तमूर्तिः, बालः प्रवालो नवकिसलयं स्वस्य, एवंविधो यो विटपस्तदुत्पत्तिस्थानमित्यर्थः ।

अत्र लतेति । अचेतनत्वेन लतायाः सम्बोध्यत्वाभावादिति भावः ।

ननु विभ्राजत इत्येवास्तु । तथा च 'देवी लतावद् विभ्राजते' इत्येवार्थ इत्यत आह—सम्बोध्यमानेति । सम्बोध्यविषयस्य तच्छक्तस्येत्यर्थः । देवीसम्बोध्याभिधानात् । तत्र च प्रथमपुरुषस्यासाधुत्वादिति भावः । व्यत्यासात् तत्परित्यागेनेतराध्याहारादित्यर्थः ।

विधिभेदं दर्शयति—गङ्गेति ।

ननु प्रवहत्वित्येवोभयत्रान्वेति, अत आह—न त्विति । विधेरिति । व्यत्यासादित्यन्वेति । आशीर्विहितलोट्प्रत्ययस्यानागतेष्टविषयार्थकत्वात् कीर्तावेवान्वयः, न तु विद्यमाने गङ्गाप्रवाहे । तथा च यथा गङ्गा प्रवहति तथा कीर्तिः प्रवहत्वित्यर्थे विधेर्भेदः ।

ननु प्रवहणस्य सिद्धत्वेऽपि कस्यचिदेवानागतार्थस्य गङ्गानिष्ठस्य विधिविषयत्वं भविष्यतीत्यत आह—एवं जातीयकस्येति । असम्भवादिति ।

ननु समानमुच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितायामुपमायामुपमेयस्य प्रकृतधर्माभिसम्बन्धाद् न कश्चित् कालादिभेदोऽस्ति । यत्राप्युपात्तेनैव सामान्यधर्मेणो-पमाऽवगम्यते, यथा 'युधिष्ठिर इवायं सत्यं वदति' इति,

---

उपमेयेऽसम्भवादित्यर्थः । वस्तुतस्तु गतिमनुरुध्य तादृशधर्मान्तरस्योपमान-गतस्य सम्भवेऽपि स्वप्रकृत्यनुपस्थापितत्वेन विधेस्तदन्वितस्वार्थबोधकत्वा-देवेति ध्येयम् ।

विध्यादिभेद इति । यद्यपि विधेरेकमात्रान्वयिनो भेदासम्भवः, तथापि प्रागुक्तो व्यत्यास एव भेदपदेन विवक्षित इति ध्येयम् ।

शङ्कते—नन्विति । समानमित्यग्रेतनेन धर्मान्तरमित्यनेनान्वेति । धर्मान्तरं कालपुरुषविध्यादिभेदविषयभिन्नम् । उपमेयस्येति । उपमेयस्य कालपुरुषविध्यादिभेदविषयधर्मसम्बन्धनिबन्धनो न कश्चन कालादि-भेदोऽस्ति दूषकताप्रयोजक इति शेषः ।

तथा च विशेषानवरुद्धं धर्ममादायैवोपमायां पर्यवसितायां पश्चात् प्रतीतोऽपि कालादिभेदो न दूषकः । तादृशधर्मप्रतीतिश्च शब्दाद् वाऽर्थादिति समुदायार्थः ।

अत्र काम इवायं राजा भाति' इत्यत्र साधारणधर्मस्य सौन्दर्यादेरनु-पात्तत्वेऽप्यर्थसामर्थ्येन प्रतीयमानत्वात् कामसादृश्यप्रतीतौ पश्चात्क्रियान्वये वर्तमानकालभानात् कालभेदोऽपि न दोषः, अभिहितान्वयस्य पञ्चमो-ल्लासे व्यवस्थापितत्वात् ।

प्रथमं विशेषणेनैव कारकान्वयः पश्चात्क्रिययेति व्युत्पत्तेरिति द्रष्टव्यम् । ननु यत्र कालविशिष्टेनोपात्तेनैव साधारणधर्मेणोपमानिर्वाहः, तत्र नेदं समाधानमित्याह—यत्रापीति । सामान्यधर्मेणेति । वस्तुगत्या भिन्नकालेनेति शेषः । उपमा अवगम्यत इत्यस्य तत्रापि न कश्चन कालभेदोऽस्तीति शेषः ।

उदाहरति—यथा युधिष्ठिर इत्यादि । अत्र सत्यवादित्वमुपात्तमेव साधर्म्यम् । तच्च वस्तुगत्या भिन्नकालमेवेत्यर्थः ।

तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे ।

सत्यवादी सत्यं वदतीति च न पौनरुक्त्यमाशङ्कनीयम्, 'रैपोषं पुष्णाति' इतिवद् युधिष्ठिर इव सत्यवदनेन सत्यवादी अयमित्यर्थावगमात् ।

सत्यमेतत्, किन्तु स्थितेषु प्रयोगेषु समर्थनमिदम्, न तु सर्वथा निरवद्यम्, प्रस्तुतवस्तुप्रतीतिव्याघातादिति सचेतस एवात्र प्रमाणम् ।

---

निर्दोषत्वमुपपादयति—तत्रेति । अनिर्दिष्टार्थाः 'प्रत्ययास्त्रिष्वपि कालेषु भवन्ति'इति न्यायात् सत्यवादित्वमतीतादिसाधारणमेव प्रतीयते इति न वर्तमानकालनियन्त्रितमित्यर्थः ।

यद्यपि सत्यं वदतीत्यपि समभिव्याहृतं पदमस्ति, तथापि ण्यन्तपदोपस्थापितेनैव तादृशेन सत्यवादित्वरूपसाधारणधर्मेणोपमानिर्वाहे पश्चात् क्रियान्वये प्रतीयमानोऽपि कालभेदो न दूषक इति मन्तव्यम् ।

रैपोषमिति । यद्यपि रैपोषमित्यत्रानुप्रयोगस्य निराकाङ्क्षत्वेऽप्यानुशासनिकत्वेन प्रयोगसाधुत्वाद् राया पुष्णातीत्येवान्वयबोधः ।

तत्र च न पौनरुक्त्यम्, प्रकृते च तदभावात् पौनरुक्त्यमेव भवितुमर्हतीति न दृष्टान्तसङ्गतिः, तथापि 'घटेन घटवद् भूतलम्' इतिवत् सत्यवदनेन सत्यवादीति न निराकाङ्क्षत्वमिति शब्दाधिक्येऽपि न निराकाङ्क्षत्वमित्यत्र दृष्टान्त इति ध्येयम् ।

ननु सर्वथा निरवद्यमिति 'युधिष्ठिर इवायं सत्यं ब्रवीति' इति वाक्ये णिन्यन्तपदाश्रयणादध्याहारनिमित्ताभावात् श्रूयमाणलडर्थकवर्तमानकृतेः परित्यागे हेत्वभावाच्च सत्यवदनेन सत्यवाद्ययमित्याकारकस्यान्वयबोधस्यैवासिद्धेरिति भावः ।

तदुक्तम्—स्थितेष्वनुप्रयोगेष्विति । विद्यमानेष्वित्यर्थः ।

किञ्च, 'घटेन घटवद् भूतलम्' इत्यादौ लौकिकवाक्ये यथाकथञ्चित् समर्थनेऽपि काव्ये कथितपदत्वापुष्टार्थत्वादिदोषो दुर्निवार एवेति दिक् ।

प्रस्तुतेति । औपम्यप्रतीतावपि कालादेरेकमात्रान्वयित्वादन्यत्र भङ्गेन भग्नप्रक्रमत्वानपायादित्यर्थः ।

असादृश्यासम्भवावप्युपमायामनुचितार्थयामेव पर्यव-स्यतः । यथा—

ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ॥ ६९८ ॥

अत्र काव्यस्य शशिना अर्थानाञ्च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम् ।

निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात् ॥

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलान्निष्पतन्त्यो न सम्भवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

उत्प्रेक्षायामपि सम्भावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते, न यथाशब्दोऽपि, केवलस्यास्य साधर्म्यमेव प्रतिपाद-यितुं पर्याप्तत्वात्, तस्य चास्यामविवक्षितत्वादिति तत्रा-शक्तिरस्यावाचकत्वं दोषः । यथा—

---

अनुचितार्थतायामिति । इदमापाततः । वस्तुतस्त्वप्रयुक्तत्वमेवात्र दोषः, अन्यथा कष्टार्थोदाहरणे 'महाकाव्यव्योम्नि' इत्यादौ यथाकथञ्चित् साधर्म्येणेवात्राप्याह्लादकत्वादिना काव्यशशिनोरौपम्याक्षतेरिति मन्तव्यम् ।

असम्भवस्थलेऽपि यत्रोपमानमुपमेयं वात्यन्तमसम्भाव्यमेवोपनिबध्यते, तत्रैव दोषः; यथोदाहृते 'जाज्वल्यमाना' इत्यादौ वारिधाराजातीयस्य कदापि सूर्यजातीयत्वाप्रसिद्धेः । यथा 'मेरुगिरेः शृङ्गं तोयवर्षेण तोयद' इत्यादौ तु कुत्रचिद् गिरिजातीयशृङ्गे मेघजातीयकर्तृकवृष्टिसम्भवान्न दोष इति ध्येयम् ।

केवलस्येति । असमस्तस्येत्यर्थः । यथायोगं यथार्थमित्यादौ यथाशब्दस्य योग्यानतिक्रमादिबोधकत्वादित्यर्थः ।

उद्ययौ दीर्घिकागर्भाद् मुकुलं मेचकोत्पलम्।
नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा ॥७००॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वाद् निरुपाख्यप्रख्यम्, तत्समर्थनाय यदर्थान्तरन्यासोपादानम्, तत आलेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्यानुचितार्थतैव दोषः। यथा—

दिवाकराद् रक्षति यो गुहासु
लीनं दिवा भीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसामतीव ॥७०१॥

अत्राचेतनस्य तमसो दिवाकरात् त्रास एव न सम्भवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम्? सम्भावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः।

साधारणविशेषणवशादेव समासोक्तिरनुक्तमप्युपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावाद् अनुपादेयत्वं यत्, तदपुष्टार्थत्वं पुनरुक्तं वा दोषः।

---

निरुपाख्यमलीकम्, शशविषाणगगनकुसुमादि, तत्प्रख्यं तत्तुल्यमित्यर्थः।

दिवाकरादिति। अत्र च स्वतःसम्भवित्वपक्षे दूषणमिदम्, कविप्रौढोक्तिनिष्पन्नपक्षे तु न दोषः।

भीतमिवेत्यादावुत्प्रेक्षायाः स्वयमुदाहृतत्वादिति यद् भ्रान्तसमाधानम्, तन्मन्दम्, उत्प्रेक्षासमर्थकार्थान्तरन्यासस्यैवात्र दूषितत्वात्। उत्प्रेक्षायाः पुनरदुष्टत्वादेवेति।

कुत एव तदिति। तथा चायमाहार्यारोप एवेति भावः। एवमाहार्यारोपत्वेन सम्भावितेनेति विशेषदर्शनकालेनेति शेषः।

यथा–

स्पृशति तिग्मरुचौ ककुभः करै-
दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं
रुचिरया चिरयापि दिनश्रिया ।।७०२।।

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया नायिकात्वेन च व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन ?

श्लेषोपमायास्तु स विषयो यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः ।

यथा––

स्वयं च पल्लवाताम्रभास्वत्करविराजिता ।
प्रभातसन्ध्येवास्वापफललुब्धे हितप्रदा ।।७०३।। इति ।

---

स्पृशतीति । तिग्मांशौ ककुभः स्पृशति सति दिनश्रियाऽतनुमानपरिग्रहया स्थितमित्यन्वयः ।

यथा सदृशेति । तिग्मरुचेः करेण स्त्रीस्पर्शकारित्वं नायकोचितं विशेषणम्, ककुभां च करेण पुरुषस्पृश्यत्वं नायिकायोग्यं विशेषणमित्यर्थः । व्यक्तीति । लिङ्गविशेषेत्यर्थः । तिग्मरुचेः पुंल्लिङ्गपरिग्रहेण ककुभां स्त्रीलिङ्गपरिग्रहेणेत्यर्थः । रवेर्नायकताभिव्यक्तिरित्युपलक्षणम्, ककुभां नायिकात्वव्यक्तिरित्यपि बोध्यम् । भविष्यतीति । व्यक्तिरित्यनुषज्यते ।

नन्वयं श्लेषोपमाया एव विषयोऽस्तु, अत आह––श्लेषेति । न तथा प्रतीतिरिति ।

इदमत्राभिसंहितम्––यत्रोपमानस्य स्वपदोपादानेऽपि न समासोक्तिभङ्गः, तत्रावश्यकसमासोक्त्यैव चमत्कारादुपमानस्य स्वशब्दोपादानं व्यर्थम्, यथोदाहृते स्पृशतीत्यादौ । अत्र हि दयितयेत्युपादानेऽपि तिग्मरुचेर्नायकत्वम्, दिवसश्रियश्च प्रतिनायिकात्वं यथायोग्यविशेषणवशेन प्रतीयत एवेति समासोक्तेरावश्यकत्वम् ।

अप्रस्तुप्रशंसायामप्युपमेयमनयैव रीत्या प्रतीतम्न, पुनः प्रयोगेण कदर्थतां नेयम् ।

यथा—

आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्यते
मध्येवारिधि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥७०४॥

अत्राचेतनस्य प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तौ न युक्तमेव पुनः कथनम् ।

तदेतेऽलङ्कारदोषा यथासम्भविनोऽन्येऽप्येवञ्जातीयकाः पूर्वोक्तयैव दोषजात्याऽन्तर्भाविताः, न पृथक् प्रतिपादनमर्हन्तीति सम्पूर्णमिदं काव्यलक्षणम् ।

---

यत्र तूपमानोपादाने समासोक्तिर्निवर्तते, तत्रोपमाया एव चमत्कारनिर्वाहकत्वादुपादेयमेवोपमानम् । यथा—स्वयं चेत्यादौ ।

तत्रोपमानोपादाने समासोक्त्यप्रतीतेरिति दिक् ।

अप्रस्तुतप्रशंसायामपि इति । प्रतीतं व्यङ्ग्यम् उपनिबद्धव्यमिति शेषः ।

आहूतेष्विति । विहायसा गच्छतीति विहङ्गमः । आयान् अगच्छन् । मध्येवारिधि वारिधेर्मध्ये वेति भिन्नं पदम् । समुच्चये वावसन्निति चेत् कियतान्तम्, वा न कल्पत इति न त्रिकाल् कुः । कल्पत एवेत्यर्थः । सामान्यं समानधर्मसम्बन्धमित्यर्थः । तद्धितस्य सम्बन्धवाचकत्वात्, अनामृष्टं पृच्छान्तरम् अपरामृष्टेतरभेदमित्यर्थ । अन्येऽपि इति ।

या घर्मभासस्तनयापि शीतलैः
　　स्वसा यमस्यापि जनस्य जीवनैः ।
कृष्णापि शुद्धेरधिकं विधायिभि-
　　र्विहन्तुमंहांसि जलैः पटीयसी ॥

इत्येष मार्गो विदुषां विभिन्नोऽ-
प्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्
विनिर्मिता सङ्घटनैव हेतुः ॥१॥

**॥ इति काव्यप्रकाशेऽर्थालङ्कारनिर्णयो नाम दशमोल्लासः ॥**



---

इत्यत्र प्रतिपाद्यविरोधालङ्कारस्य सामानाधिकरण्यप्रतिसमानविरुद्ध-द्वयमूलत्वादत्र चोलत्वादीनां वैयधिकरण्येनैव निर्देशादनभिहितवाच्यत्व-मित्यादि स्वयमूहनीयम् ।

जगदानन्दकन्दाय कृष्णाय परमात्मने ।
योगेश्वराय हरये तस्मै विश्वात्मने नमः ॥

**इति परमानन्दचक्रवर्तिकृतायां काव्यप्रकाशविस्तारिकाया-मर्थालङ्कारनिरूपणं नाम दशमोल्लासः ।**

**॥ सम्पूर्णेयं काव्यप्रकाशविस्तारिका ॥**



## परिशिष्टम्-१

# कारिकामूलपाठः

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥१॥
काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥२॥
शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥३॥
तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।
इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः ॥
अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।
शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥५॥
स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।
वाच्यादयस्तदर्थाः स्युस्तात्पर्यार्थोऽपि केषुचित् ॥६॥
सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।
साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः ॥७॥
सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।
स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥८॥
मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया ॥९॥
स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥१०॥

सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।
विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥११॥
भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा ।
गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधा ॥१२॥
व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।
तच्च गूढमगूढं वा तदेषा कथिता त्रिधा ॥१३॥
तद्भूर्लाक्षणिकस्तत्र व्यापारो व्यञ्जनात्मकः ।
यस्य प्रतीतिमाधातुं लक्षणा स मुपास्यते ॥१४॥
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।
नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा ॥१५॥
लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥१६॥
एवमप्यनवस्था स्याद् या मूलक्षयकारिणी ।
प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥१७॥
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।
विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु लक्षिते ॥१८॥
अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥१९॥
तद्युक्तो व्यञ्जकः शब्दो यत् सोऽर्थान्तरयुक् तथा ।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥२०॥
अर्थाः प्रोक्ताः पुरा तेषामर्थव्यञ्जकतोच्यते ।
वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ॥२१॥
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधी हेतुर्व्यापारो व्यक्तिरेव सा ॥२२॥

शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥२३॥
अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ ।
अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ॥२४॥
विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।
कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥२५॥
रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलङ्काराद‌लङ्कार्यतया स्थितः ॥२६॥
कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥२७॥
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥२८॥
शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥२९॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥३०॥
निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥३१॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥३२॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥३३॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥३४॥

निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।
रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ॥३५॥

भावः प्रोक्तस्तदाभासा अनौचित्यप्रवर्तिताः ।
भावप्रशान्तिरुदयः सन्धिः शबलता तथा ॥३६॥

मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।
अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥३७॥

शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ।
अलङ्कारोऽथ वस्त्वेव शब्दाद् यत्रावभासते ॥३८॥

प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ।
अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः ॥३९॥

प्रौढोक्तिमात्रात् सिद्धो वा कवेस्तेनोम्भितस्य वा ।
वस्तु वाऽलङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥४०॥

वस्त्वलङ्कारमथ वा तेनायं द्वादशात्मकः ।
शब्दार्थोभयभूरेको भेदा अष्टादशास्य तत् ॥४१॥

रसादीनामनन्तत्वाद् भेद एको हि गण्यते ।
वाक्ये द्व्युत्थः पदेऽप्यन्ये प्रबन्धेऽप्यर्थशक्तिभूः ॥४२॥

पदैकदेशरचनावर्णेष्वपि रसादयः ।
भेदास्तदेकपञ्चाशत् तेषां चान्योऽन्ययोजने ॥४३॥

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।
वेदखाब्धिवियच्चन्द्राः शरेषुयुगखेन्दवः ॥४४॥

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥४५॥

व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।
एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥४६॥

सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।
अन्योऽन्ययोगादेवं स्याद् भेदसङ्ख्याति भूयसी ॥४७॥
शब्दार्थचित्रं यत् पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः ॥४८॥
मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्यः ।
उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥४९॥
दुष्टं पदं श्रुतिकटुच्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहितार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥५०॥
संन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव ॥५१॥
अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।
वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥५२॥
प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥५३॥
अर्धान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् ।
अपदस्थपदसमासं सङ्कीर्णं गर्भितं प्रसिद्धिहतम् ॥५४॥
भग्नप्रक्रममक्रमममतपरार्थं च वाक्यमेव तथा ।
अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥५५॥
सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।
अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ॥५६॥
साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।
विध्यनुवादायुक्तस्त्यक्तपुनः स्वीकृतोऽश्लीलः ॥५७॥
कर्णावतंसादिपदं कर्णध्वनिनिर्मितिः ।
सन्निधानादिबोधार्थं स्थितेष्वेतत्समर्थनम् ॥५८॥

ख्याते़ऽर्थे निर्हेतोरदुष्टताऽनुकरणे तु सर्वेषाम् ।
वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ ॥

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥६०॥

प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥६१॥

अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधान च रसे दोषाः स्युरीदृशाः ॥६२॥

न दोषाः स्वपदेनोक्तावपि सञ्चारिणः क्वचित् ।
सञ्चार्यादेर्विरुद्धस्य बाधस्योक्तिर्गुणावहा ॥६३॥

आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।
रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ॥६४॥

स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥६५॥

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥६६॥

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥६७॥

माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।
आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥६८॥

करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।
दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥६९॥

बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।
शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यः ॥७०॥

व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः ।
गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥७१॥
केचिदन्तर्भवन्त्येषु दोषाभावात् परे श्रिताः ।
अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥७२॥
तेन नार्थगुणा वाच्याः प्रोक्ताः शब्दगुणाश्च ये ।
वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥७३॥
मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥७४॥
योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः ।
टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥७५॥
श्रुतिमात्रेण शब्दात् तु येनार्थप्रत्ययो भवेत् ।
साधारणः समग्राणां स प्रसादो गुणो मतः ॥७६॥
वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥७७॥
यदुक्तमन्यथावाक्यमन्यथाऽन्येन योज्यते ।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥७८॥
वर्णसाम्यमनुप्रासश्छेकवृत्तिगतो द्विधा ।
सोऽनेकस्य सकृत्पूर्व एकस्याप्यसकृत्परः ॥७९॥
माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा कोमला परैः ॥८०॥
केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।
शब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥८१॥
पदानां स पदस्यापि वृत्तावन्यत्र तत्र वा ।
नाम्नः स वृत्त्यवृत्त्योश्च तेनायं पञ्चधा मतः ॥८२॥

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।
यमकं पादतद्भागवृत्ति तद् यात्यनेकताम् ॥८३॥
वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृशः ।
श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥८४॥
भेदाभावात् प्रकृत्यादेर्भेदोऽपि नवमो भवेत् ।
तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥८५॥
पुनरुक्तवदाभासो विभिन्नाकारशब्दगः ।
एकार्थतेव शब्दस्य तथा शब्दार्थयोरयम् ॥८६॥
साधर्म्यमुपमा भेदे पूर्णा लुप्ता च साऽग्रिमा ।
श्रौत्यार्थी च भवेद् वाक्ये समासे तद्धिते तथा ॥८७॥
तद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः ।
उपमानानुपादाने वाक्यगाथ समासगा ॥८८॥
वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।
कर्मकर्त्रोर्णमुल्येतद्धिलोपे क्विप्समासगा ॥८९॥
धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।
क्यचि वाद्युपमेयासे त्रिलोपे च समासगा ॥९०॥
उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।
अनन्वयो विपर्यास उपमेयोपमा तयोः ॥९१॥
सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।
ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥९२॥
तद्रूपकमभेदो य उपमानोपमेययोः ।
समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥९३॥
श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् ।
साङ्गमेतन्निरङ्गं तु शुद्धं माला तु पूर्ववत् ॥९४॥

नियतारोपणोपायः स्यादारोपः परस्य यः ।
तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥९५॥
प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः ।
श्लेषः स वाक्ये एकस्मिन् यत्रानेकार्थता भवेत् ॥९६॥
परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिर्निदर्शना ।
अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ॥९७॥
स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।
अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥९८॥
कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥९९॥
निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥१००॥
कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।
विज्ञेयातिशयोक्तिः सा प्रतिवस्तूपमा तु सा ॥१०१॥
सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।
दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥१०२॥
सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥१०३॥
मालादीपकमाद्यं चेद् यथोत्तरगुणावहम् ।
नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥१०४॥
उपमानाद् यदन्यस्य व्यतिरेकः स एव सः ।
हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥१०५॥
शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे तद्वत् त्रिरष्ट तत् ।
निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥१०६॥

वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।
क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥१०७॥
विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।
यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥१०८॥
सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥१०९॥
विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।
जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद् गुणैस्त्रिभिः ॥११०॥
क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश ।
स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥१११॥
व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।
सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥११२॥
विनोक्तिः सा विनान्येन यत्रान्यः सन्न नेतरः ।
परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैः ॥११३॥
प्रत्यक्षा इव यद् भावाः क्रियन्ते भूतभाविनः ।
तद्भाविकं काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥११४॥
पर्यायोक्तं विना वाच्यवाचकत्वेन यद् वचः ।
उदात्तं वस्तुनः सम्पद् महतां चोपलक्षणम् ॥११५॥
तत्सिद्धिहेतावेकस्मिन् यत्रान्यत् तत्करं भवेत् ।
समुच्चयोऽसौ स त्वन्यो युगपद् या गुणक्रियाः ॥११६॥
एकं क्रमेणानेकस्मिन् पर्यायोऽन्यस्ततोऽन्यथा ।
अनुमानं तदुक्तं यत् साध्यसाधनयोर्वचः ॥११७॥
विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।
व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥११८॥

किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते ।
तादृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता ॥११९॥
यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता ।
तदा कारणमाला स्यात् क्रियया तु परस्परम् ॥१२०॥
वस्तुनोर्जननेऽन्योन्यमुत्तरश्रुतिमात्रतः ।
प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥१२१॥
असकृद् यदसम्भाव्यमुत्तरं स्यात् तदुत्तरम् ।
कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ॥१२२॥
धर्मेण केनचिद् यत्र तत् सूक्ष्मं परिचक्षते ।
उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः ॥१२३॥
भिन्नदेशतयात्यन्तं कार्यकारणभूतयोः ।
युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः ॥१२४॥
समाधिः सुकरं कार्यं कारणान्तरयोगतः ।
समं योग्यतया योगो यदि सम्भावितः क्वचित् ॥१२५॥
क्वचिद् यदतिवैधर्म्यान्न श्लेषो घटनामियात् ।
कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद् भवेत् ॥१२६॥
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये ।
क्रमेण च विरुद्धे यत् स एष विषमो मतः ॥१२७॥
महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥१२८॥
प्रतिपक्षमसक्तेन प्रतिकर्तुं तिरस्क्रिया ।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥१२९॥
समेन लक्ष्मणा वस्तु वस्तुना यन्निगद्यते ।
निजेनागन्तुना वापि तत्मीलितमिति स्मृतम् ॥१३०॥

स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम् ।
विशेषणतया यत्र वस्तु सैकावली द्विधा ॥१३१॥
यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।
स्मरणं भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने ॥१३२॥
आक्षेप उपमानस्य प्रतीपमुपमेयता ।
तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम् ॥१३३॥
प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ।
ऐकात्म्यं बध्यते योगात् तत्सामान्यमिति स्मृतम् ॥१३४॥
विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥१३५॥
अन्यत् प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।
तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥१३६॥
स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥१३७॥
तद्रूपाननुहारश्चेदस्य तत् स्यादतद्गुणः ।
यद्यथा साधितं केनाप्यपरेण तदन्यथा ॥१३८॥
तथैव यद् विधीयेत स व्याघात इति स्मृतः ।
सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥१३९॥
अविश्रान्तियुपामात्मन्यङ्गाङ्गित्वं तु सङ्करः ।
एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥१४०॥
स्फुटमेकस्मिन् विषये शब्दार्थालङ्कृतिद्वयम् ।
व्यवस्थितं च तेनासौ त्रिरूपः परिकीर्तितः ॥१४१॥
एषां दोषा यथायोगं सम्भवन्तोऽपि केचन ।
उक्तेष्वन्तर्भवन्तीति न पृथग् प्रतिपादिताः ॥१४२॥



## परिशिष्टम्—२

# उदाहरणोद्धृतश्लोकानुक्रमणिका

[ अत्र पृष्ठाङ्कात् पूर्वं १, २ इति सङ्ख्या क्रमशः
प्रथम-द्वितीयभागबोधिका ]

## परिशिष्टम्–३

# टीकोद्धृतश्लोकानुक्रमणिका

# परिशिष्टम्-४

# शब्दानुक्रमणी

## [ अ ]

अनुमानम् = साध्यत्वेन साधनत्वेन च प्रतिपादनम् २-२५०
अनुकूलम् = वर्णनाविरहः,
अनुल्वणत्वम्, प्रसिद्धिः, २-१३३
अनुसन्धानम् = ज्ञानम् १-९३
एतदभिप्रायेणोदमुक्तमिति विचारणम् १-९५
अनुस्वानः = प्रतिध्वनिः
अनेडमूकः = मूकबधिरः २-२५
अन्तरः = स्वस्माद् रत्यादेरन्यः सम्पर्कः १-१००
अन्योन्यम् = पूर्णोत्पन्नयोरेवान्योऽन्योपकारोपरागेणान्योऽन्यजनकत्वा-
भिधानम् २-२५५
अन्योन्याभावः = ज्ञायमानवैधर्म्यम् १-२२४
अपकर्षः = रसनिष्ठजातिविशेषः २-४
अपदयुक्तता = पूर्वप्रतीतानाकाङ्क्षितार्थसमाप्यत्वम् २-८७
अपदस्थसमासम् = स्थानभ्रष्टसमासवद् वाक्यम् २-६२
अपदार्थः = प्रत्येकपदवृत्त्यविषयः १-३५
अपविद्धः = चलितः २-४३
अपस्मारः = मनःक्षेपः १-१२६
अपुष्टः = प्रकृतवाक्यार्थस्वरूपोत्कर्षाहेतुः २-७२
अप्रयुक्तत्वम् = विद्वत्प्रयोगानर्हत्वम्, येन रूपेणानुशिष्टं तेन रूपेणा-
प्रयोगेऽनुशिष्टत्वावच्छेदकावच्छिन्नप्रयोगाभाववत्त्वम् २-७
अभिधा = शब्दार्थयोर्ज्ञापकज्ञाप्यत्वाख्यः स्वरूपसम्बन्धविशेषः १-६४
लिङ्निष्ठा शब्दभावनापरनाम्नी यागदौ प्रवर्तिका १-७२
अभिधानम् = शब्दः १-४५
अभिनयः = अङ्गादिक्रियया नायकाद्यवस्थानुकरणम् २-१३८
अभिन्नम् = एकाकारम् १-४५
अभिभवः = बलवत्सजातीयग्रहणकृतमग्रहणम् २-२६५
अभिमुखीकरणम् = विस्मारितान्यकरणीयत्वभावनम् १-१०
अभिलाषः = प्राप्तिनिश्चयः, प्रत्याशा १-११०
अभिव्यक्तः = प्रतिबन्धकापगमे स्वयं प्रकाशितः १-६९
अभिहितान्वयवादः = जातिविशिष्टव्यक्तिशक्तिवादिनैयायिकनयः १-२०५
अभेदः = साजात्यम् १-५९
यथा रीत्योपक्रमस्तस्यैव समापनम् २-१३१

[आ]

[इ]



[ई]



[उ]

[ख]



[ग]

## [घ]

घटना = निकृतिः २-२६१
घृणिः = रश्मिः २-९३

## [च]

चतुर्वर्गः = धर्मार्थकाममोक्षवर्गचतुष्टयम् १-११
चमत्कारः = आस्वादः १-२६
चमत्कृतिः = आस्वादः १-१२३
चरणानतिः = चरणशिरःसंयोगः १-१०७
चर्चा = प्रसङ्गः १-१७१
चर्वणम् = विभावाद्यंशविषयकत्वम् १-१००
चर्वणा = आस्वादस्य विभावादिसम्बन्धः, विभावादिसमूहालम्बनसाध्या १-१०२
चर्व्यमाणः = पुनः पुनरनुमीयमानः १-९६
चर्व्यमाणता = विभावादीनां तत्तद्विषयत्वम् १-१००
चापलम् = चेतोऽनवस्था १-१२४
चित्रम् = अव्यङ्ग्यम् १-२९
चिन्ता = सस्कारोद्बोधको ध्यानाख्यो ज्ञानविशेषः १-१०५
ध्यानम् १-१२४
चेष्टा = अङ्गक्रिया १-२०६
च्युतसंस्कृति = व्याकरणव्युत्पत्तिविरहवत् २-६

## [छ]

छन्दः = काव्ये वर्णादिनियमबोधकं शास्त्रम् १-११
छातेतरत् = अल्पेतरत् १-३०
छाया = कान्तिः १-२८

## [ज]

जडता = अप्रतिपत्तिः १-१२५
जातिः = सामान्यम् १-४२
जुगुप्सा = दोषेक्षणादिभिर्गर्हा १-१२१

## [ट]

टङ्कः = कठिनस्थानविदारकः १-६०

## [त]



## [द]



## [ध]

## [न]

नवः = प्रथमोदितः १-१६६
नवीकृतः = विच्छित्तिविशेषानाधायकः पुनः प्रतीतिविषयोऽर्थः २-८२
नाटकम् = पञ्चसन्धिसमन्वितं पञ्चादिदशपर्यन्ताङ्ककं ख्यातवृत्तं काव्यम् १-१७९
नामानुशासनम् = अभिधानसंग्रहः १-११
निद्रा = मनःसम्मीलनम् १-१२६
नियतः = प्रमाणान्तराद् व्यवच्छिन्नः १-९९
नियतत्वम् = तात्पर्यज्ञानाधीनज्ञानविषयत्वम् १-२२५
नियमपरिवृत्तिः = विवक्षितनियमस्य शब्दादप्रतिपत्तिः २-१९७
निरुपाख्यम् = अलीकम् २-२९६
निर्वृतिः = सुखम् १-८
निर्वहणम् = समापनम् १-१७९
निर्वेदः = स्वावमाननम् १-१७२
विषयवैरस्यम् २-१२७
निशातान्तरम् = गृहविशेषः, वासगृहम् १-११२
निशुम्भः = नमनग् २-४३
निष्कलङ्कः = कलामात्रावशिष्टः १-१०६
निष्पत्तिः = प्रकाशः १-७३
निहतार्थम् = प्रसिद्धार्थप्रतीतिव्यवधानेनाप्रसिद्धार्थस्य शक्त्या बोधकम् २-९
नीचः = अधोलग्नः, कृत्रिमविनयप्रकृतिमापन्नः १-२३५
नेयार्थम् = रूढिप्रयोजनं विना शक्यसम्बन्धमात्रेणाशक्यार्थे स्थापनम् २-१६
नैर्मल्यम् = दोषगुणविवेकः १-२२३
न्यायः = युक्तिः, 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्' इत्यादिरूपः १-५३
न्यायदोषः = साधकबाधकमानम् २-२८२
न्यूनपदम् = अनुपात्तविवक्षितान्वयप्रतियोग्युपस्थापकम् २-४७

## [प]

पक्षः = शुक्लकृष्णान्यतरपञ्चदशात्मकतिथिप्रचयः १-१४२
पञ्चाननः = सर्वदिक्प्रसारितदृष्टिविभवः २-५०
पणः = निष्क्रयः, सङ्ख्याविशेषः १-१९८
पतनम् = अधःसंयोगः २-१९५

[ब]



[भ]

व्युत्पत्तिः = दृढतरः संस्कारः १-१२

[ श ]

शङ्का = अनिष्टसमुन्नयः १-१२२

शक्तिः = काव्यनिर्माणास्वादानुभवात्मिका वासना १-१०

शठः = पराहितकारी १-१३२

शत्रुः = द्वेष्यः १-९६

शबलता = पूर्वपूर्वोपमर्देन परपरोदयः १-१३५,१६२

शरीरभाक् = प्रकृष्टज्ञानवान् १-१३२

शान्तिः = प्रशमः १-१३५

शापः = मुन्यादिकोपनियन्त्रणम् १-१११

शाब्दम् = श्रुतिमात्रगम्यम् २-२२८

शिक्षा = गुरोरुपदेशग्रहणम् १-९५

शुद्धा = लक्ष्यवाचकपदासमभिव्याहृतलक्षकपदनिष्ठा १-५५

शोकः = चेतोवैक्लव्यम् १-१२१

श्यामा = रात्रिः,

वर्णविशेषवती सितासितामितादिसकलवसनाभरणानु-

लेपनसुभगा १-१५४

श्रीः = सभ्यवशीकरणसम्पत्तिः २-१३

श्रुतार्थापत्तिः = श्रुतेन शब्देनाश्रुतार्थस्यापत्तिः १-५४

श्रुतिः = शब्दः समानाधिकरणात्मकः १-५२

श्रौती = उपमानोपमेययोः समानधर्मो यत्र शब्दादवसीयते २-१७३

श्लथीकरणम् = उत्कण्ठापनोदनम् २-२३३

श्लिष्टम् = प्रकृताप्रकृतसाधारणं विशेषणम् २-१०६

श्लेषः = सम्बन्धः २-२६१

श्लेषणम् = अगृहीतभिन्नस्वरूपत्वम् २-१५३

[ स ]

संयोगः = साहित्यम् १-६३

संरम्भः = त्वरा १-१२१

संवादः = ऐक्यरूप्यम् १-१००

संवेदनम् = विलोपितज्ञानान्तरजन्यसर्ववासनम् १-१०३

संसृष्टिः = एकत्र काव्ये शब्दार्थालङ्काराणां भेदेन स्थितिः २-२७७

संस्कारविशेषः = आत्मनो विशेषगुणविशेषः, वेगादिव्यावृत्तो भावनाख्यः १-१०

सङ्कीर्णम् = वाक्यान्तरपदसमभिव्याहृतं वाक्यम्, वाक्यान्तरख्यात-क्रियासमाप्यम् २-६३

सङ्केतः = अस्माच्छब्दादयमर्थो बोद्धव्य इत्युद्देशनम् १-३८

सङ्घटना = पदानां पौर्वापर्येण विन्यासः १-२२३

सञ्चरणम् = रत्यादेरास्वादाङ्कुरप्रादुर्भावनम् १-९२

सत्त्वम् = आन्तरो धर्मः १-९७

सदागमः = सच्छास्त्रम् १-१६१

सदृशम् = उचितम् १-३६

सद्भावः = साधुत्वम् १-३६

सन्दिग्धः = प्रकरणाभावात् सन्दिह्यमानोऽर्थः २-७८

सन्दिग्धम् = तात्पर्यसन्देहास्पदीभूतमर्थद्वयोपस्थापकम् २-१८४

सन्देहः = एकत्र धर्मिणि तुल्यकोटिकं भावाभावोभयविषयकं ज्ञानम् २-१६१

सन्देहसङ्करः = उभयत्र साधकबाधकप्रमाणाभावप्रयुक्तस्तुल्यकोटिकः संशयः २-२८२

सन्धिः = तुल्यावस्थयोर्भावयोः संवलनम् १-१३५

सन्निधिः = आसत्तिः १-३४

सामानाधिकरण्यम् १-७१

समन्वयः = परस्परसम्बन्धः १-३५

समयः = इदं पदमस्यार्थस्याभिधायकमिति सङ्केतनम् १-६४

समर्पणम् = परस्परापेक्षता १-८७

समवायः = विप्रतिषेधः १-२१४

उपस्थापनमात्रम् १-५१

समादेशः = विधिः १-१६१

समासः = अनेकवाक्यार्थस्यैकेन प्रतिपादनम् २-१३२

समासोक्तिः = श्लिष्टैर्विशेषणैरप्रकृतस्योक्तिः २-२०५

सम्प्रज्ञातः = सविकल्पकसमाधिः २-८२

सम्बन्धः = अभिधेयाभिधानान्वयः १-१

प्रतियोग्यनुयोगित्वम् १-९९

सम्बन्धसम्बन्धः = सम्बन्धपरम्पराश्रयत्वेन प्रतीतिपरम्पराविषयः १-२२५

सम्भावनम् = उत्कटकोटिकः सन्देहः २-१८८

सम्मीलनम् = विषयवैमुख्यम् १-१२६

समुदितः = दण्डादिन्यायेन परस्परसापेक्षः १-१२

सरसत्वम् = औत्कण्ठ्यवत्त्वम् १-१०

सहचरभिन्नता = विजातीयसमभिव्याहारः २-८८

सहचारी = समानाधिकरणः १-५८

सहृदयः = रसवासनाशीलः १-१०

साकाङ्क्षत्वम् = अनुपात्तार्थाकाङ्क्षात्रिषयार्थकत्वम् २-८६

साक्षात्त्वम् = सङ्केतग्रहान्तरेणाव्यवधानम् १-३८

सादृश्यम् = भूयोधर्मवत्त्वम् १-५९

साधारणः = सजातीयः १-५९

साधारणीकरणम् = अनियतसम्बन्धिगतत्वेनार्थप्रत्यायनम् १-९७

साध्यः = साधनापेक्षः क्रियारूपः १-१४१

साभिप्रायत्वम् = पदार्थानां विशेषप्रतिपादनात्

प्रकृतवाक्यार्थपोषकत्वम् २-१३२

सामर्थ्यम् = तत्करणनियमः १-७१

साम्राज्यम् = सकलराजमण्डलशासकत्वम् २-१९९

साहचर्यम् = एकस्मिन्नर्थे परस्परसापेक्षत्वम् १-७१

सिद्धः = नित्यः, सत्स्वरूपो लिङ्गसङ्ख्याद्यन्वययोग्यः

क्रियमाणतानिर्देशशून्यः १-४१

## परिशिष्टम्-५

# टीकागतोद्धृतयः

# शुद्धिपत्रम्

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १२ | इत्वन्वयः | इत्यन्वयः |
| ५ | १४ | पदायेक्षया | पदापेक्षया |
| ८ | १५ | तन्मडहादि | तल्लडहादि |
| ९ | ४ | नोज्वली | नोज्ज्वली |
| १२ | ३ | शसिमुखी | शशिमुखी |
| १२ | ११ | पद्विविहति | पद्विहति |
| १३ | ५ | मवान्याः | भवान्याः |
| १३ | २७ | ब्रीडा | व्रीडा |
| १४ | १ | दष्टाधारः | दष्टाधरः |
| १५ | १७ | प्रतितम् | प्रतीतम् |
| १६ | ११ | तादिनां | तादीनां |
| १६ | १५ | नीथो | नीयो |
| १९ | २५ | विरुपा | विरूपा |
| २२ | २६ | षड् | षट् |
| २३ | ७ | सवः । | सवः |
| २३ | २५ | सिंह भ | सिंहभ |
| २४ | २४ | हंत्या | हन्त्या |
| २४ | २८ | सोध्यैष्टय | सोऽध्यैष्टे |
| २६ | ३ | भाड् | भ्राड् |
| २६ | ३ | माप्यवि | माप्य वि |
| २६ | १८ | संगात् | सङ्गात् |
| २६ | २१ | प्राभ्रवि | प्राभ्रभ्राड्वि |
| ३० | १६ | संगा | सङ्गा |
| ३० | २१ | स्थयि | स्थायि |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३१ | १४ | द्विविम् | द्विविधम् |
| ३१ | १५ | वश्यम् | वश्यकम् |
| ३१ | २४ | दार्शन | दर्शन |
| ३३ | १ | ते | तेऽस्ति |
| ३६ | २१ | सम्बन्धदि | सम्बन्धादि |
| ३८ | २ | लब्य | लभ्य |
| ३८ | ५ | द्धयै | ध्यै |
| ३९ | ८ | कार्ति | कार्त्ति |
| ४० | २२ | व्रण | व्रण |
| ४३ | ३ | कण्ट | कण्ठ |
| ४६ | १९ | पुंजितः | पुञ्जितः |
| ५० | २१ | मृण्मयः | मृन्मयः |
| ५२ | ५ | बा० | वा० |
| ५२ | २३ | गुष्ठन | गुण्ठन |
| ५६ | १६ | स्यित | स्थित |
| ६५ | १९ | शिष्ट्य | शिष्ट्य |
| ७० | २३ | तदूप | तद्रुप |
| ७१ | १२ | क्रीर्त्या | कीर्त्या |
| ७२ | २२ | वीभत्सः | बीभत्सः |
| ८७ | १० | मृण्मयः | मृन्मयः |
| ९३ | २० | पिशून | पिशुन |
| ९६ | १५ | तत्रा पर | तत्रापर |
| १०४ | १७ | बोधन | बोधेन |
| १०७ | २२ | त्ति | त्तिः |
| ११९ | १७ | अलङ्कांरा | अलङ्कारा |
| ११९ | २४ | पारणाहवत्वम् | परिणाहवत्त्वम् |
| १२९ | २४ | मेवोजः | मेवौजः |
| १३० | ९ | वेच्छैदा | विच्छेदा |
| १३० | १९ | त्रोजः | त्रौजः |
| १३२ | १२ | तत | तत् |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३६ | २३ | समग्राण | समग्राणां |
| १३७ | १४ | विपरितम् | विपरीतम् |
| १३९ | १४ | वलन | वलनं |
| १४० | ७ | उर्ज | ऊर्ज |
| १४३ | २३ | स्ते रासो | स्तेरासो |
| १४४ | १२ | कांक्ष | काङ्क्ष |
| १४४ | २६ | तांकार | ताकार |
| १४६ | २३ | रिका प्रवा | रिकाप्रवा |
| १४८ | २५ | र्थीं | र्थी |
| १४९ | १० | वर्णं | वर्ण |
| १५० | १५ | इत्न | इत्य |
| १५४ | ३ | हनु | ह्नु |
| १६१ | २० | कांक्षा | काङ्क्षा |
| १६५ | १५ | पंक्ति | पङ्क्ति |
| १८१ | ८ | दर्शनस्यन | दर्शनस्य न |
| ९६० | ११ | कांक्ष | काङ्क्ष |
| १३० | २५ | द्वयु | द्वयमु |
| १९९ | ११ | विद्वान्सः | विद्वांसः |
| १९९ | १८ | वैरिंञ्च | वैरिञ्चं |
| २०६ | १४ | खलूज्वला | खलूज्ज्वला |
| २०८ | १० | पुँल्लि | पुँलि |
| २०९ | २७ | वाराणै | वारणै |
| २१२ | २२ | वर्णानीय | वर्णनीय |
| २१३ | १४ | वलभीच्छा | वलभौ छा |
| २१३ | १४ | दारूणि | दारुणि |
| २१३ | १५ | भासत | भाषत |
| २१६ | १६ | छायेति | च्छायेति |
| २१६ | १९ | छाया | च्छाया |
| २२२ | ६ | द्भू | द्भु |
| २२२ | १६ | त्ब | त्व |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३० | २४ | स्वच्छता | स्वच्छता |
| २३१ | १२ | प्रद्वेण परोन | प्रद्वेपरोन |
| २३२ | ११ | निष्क्रपभ | निष्क्रप भ |
| २३२ | २७ | बिरद्ध | विरुद्ध |
| २३३ | २१ | यास्त | यास्त |
| २४४ | १९ | यदेवेति | यदेवेति |
| २४४ | २६ | किञ्चित्वं | किञ्चित्त्वं |
| २३५ | १४ | विशेषाभ्यां | विशेषाभ्यां |
| २४९ | १४ | विम्वाहरे | बिम्बाहरे |
| २५७ | ६ | कङ्कमं | कुङ्कुमं |
| २६१ | १३ | योगु | योर्गु |
| २७५ | ११ | सात्च | साच |
| २७५ | १६ | पत्ते | पत्तेः |
| २७६ | २३ | सधितम् | साधितम् |
| २८८ | २७ | पंक्ति | पङ्क्ति |
| २९५ | १ | विशष | विशेष |



# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याभिनवप्रकाशनानि

| क्रमसंख्या ग्रन्थनाम | | मूल्यम् |
|---|---|---|
| १. शुक्लयजुर्वेदकाण्वसंहिता— | [ उत्तरविंशतिः ] संहितेयं सायणभाष्यसहिता प्रकाशिता । सम्पादकः—श्रीचिन्तामणिमिश्रशर्मा— | २२-०० |
| २. वाक्यपदीयम्— | [ तृतीयकाण्डस्य द्वितीयो भागः ] ग्रन्थरत्नमिदं हेलाराजप्रणीतया प्रकाशव्याख्यया तथा च प० रघुनाथशर्मविरचितया 'अम्बाकर्त्री' टीकया च विभूष्य प्रकाशितम्— | १०७-०० |
| ३. महाभाष्यनिगूढाकूतयः— | अनुसन्धानप्रबन्धोऽयं नूनम् आनुसन्धानिकफलश्रुतिभिः समेधितो वर्तते । लेखकः सम्पादकश्च—डॉ० देवस्वरूपमिश्रः— | २६-८० |
| ४. व्याकरणदर्शनप्रतिमा— | आचार्यरामाज्ञापाण्डेयविरचितेऽस्मिन् ग्रन्थे व्याकरणशास्त्रस्य दार्शनिकपदार्थानां मौलिकं विवेचनं कृतमस्ति— | ३६-६० |
| ५. बोधायनशुल्बसूत्रम्— | ग्रन्थोऽयं श्रीव्येंकटेश्वरदीक्षितविरचितया बोधायनशुल्बमीमांसाख्यया तथा च श्रीद्वारकानाथयज्वप्रणीतबौधायनशुल्बसूत्रव्याख्यानाख्यया टीकयाऽथ च प्रभूतैः संवादात्मकैः रेखाचित्रैश्च सनाथीकृतः— | ७५-०० |
| ६. तन्त्ररत्नम्— | [ पञ्चमभागः ] पार्थसारथिमिश्रविरचितः टुप्टीकासनाथितो मीमांसाग्रन्थोऽयं साम्प्रतं सम्पादकपण्डितपट्टाभिरामशास्त्रिविरचिततात्त्विकया भूमिकया सनाथितो विराजते— | ४६-६० |
| ७. तन्त्रसङ्ग्रहः— | [तृतीयो भागः] तन्त्रशास्त्रस्य विविधतन्त्रसङ्ग्रहात्मकोऽयं ग्रन्थो बहुविधैरनुसन्धानात्मकैः भूमिका-टिप्पण-परिशिष्टैश्च समुल्लसति— | ६२-२० |
| ८. योगिनीहृदयम्— | [ तृतीयसंस्करणम् ] तन्त्रशास्त्रीयोऽयं ग्रन्थः अम्बिकानन्दयोगिकृतदीपिकाख्यया, भास्कररायकृतसेतुबन्धव्याख्यानाख्यया च टीकया समलङ्कृत्य प्रकाशितः— | ३३-४० |
| ९. रुद्रयामलम्— | तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं विविधैः किल गवेषणापूर्णैः भूमिका-टिप्पण-परिशिष्टादिभिः विभूष्य प्रकाशितम्— | [illegible]४०० |
| १०. यन्त्रराजविचारविंशाध्यायी— | आचार्यनयनसुखोपाध्यायविरचितेऽस्मि[illegible] ...तष-शास्त्रीयोपयोगिनां वेधा[illegible] [illegible]द्धान्तिकं प्रायोगिकञ्च विवेचन[illegible] | ११-०० |
| ११. पुराणेतिहासयोः साङ्ख्ययोगदर्शनविमर्शः— | [illegible]न् लेखकेन सम्पादके[illegible] ...त्रपाठिना महता प्रयासेन पौरा[illegible] ...श्च साङ्ख्य-योगपदार्था विवेचिताः— | ३२-८० |
| १२. भारतीयविचारदर्शनम्— | [illegible] ग्रन्थेऽस्मिन् लेखकेन डॉ० हरिहरनाथ-[illegible] भारतीयविचाराचाराणाम् ऐतिहासिकं [illegible] विवेचनं कृतम्— | १०५-६० |
| १३. पालित्रिपिटकसद्दान[illegible] | [illegible]त्रिपिटकान्तर्गतानां शब्दानां सान्दर्भिकः समावेशोऽ[illegible]न् ग्रन्थे कृतो वर्तते— | १००-६० |

प्रकाशकः निर्देश[illegible] [illegible]नम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२
मुद्रकः—मुद्रणाल[illegible] सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२